

हिन्दुमल्लस्य यः पुत्रो जयनारायणः सुधीः ।
पौत्रैः सार्धमुपविष्टो दानी विश्वविदग्रणीः ॥
तेनैव श्रेष्ठिवर्येण सन्ध्याभाष्यमिदं शुभम् ।
सन्ध्याकर्मप्रचाराय श्रद्धापूर्वं प्रकाशितम् ॥



# वैदिकसन्ध्याभाष्यम्



श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्माराम-
भगवत्पूज्यपादशिष्येण

श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यपण्डितस्वामिज्वाहिर-
दासभगवत्पूज्यपादाधिगतवेदवेदाङ्गविद्येन

**श्रीमन्निखिलशास्त्रनिष्णातपण्डितस्वामिहरिप्रसाद-
वैदिकमुनिना विरचितम्**

तच्च

**वैदिकधौरेयेण परमश्रद्धालुना श्रीमता हिन्दुमल्लजय-
नारायणेन दानीत्युपसमाख्यातेन श्रेष्ठिवर्य्येण**


निर्णयसागरमुद्रणालये रामचन्द्र येसू शेडगे द्वारा मुद्रापयित्वा
प्राकाश्यं नीतम्

प्रथमावृत्तिः १०००] संवत् १९७४ [मूल्यं ॥)

# भूमिका।

त्वं नः पश्चादधरादुत्तरात् पुर इन्द्र! निपाहि विश्वतः।
आरे अस्मत् कृणुहि दैव्यं भयमारे हेतीरदेवीः ॥ १ ॥

(ऋ० २।५।१।१६)

एषा खलु सर्वेभ्यो वर्तमानसूत्रारण्यकयाज्ञवल्क्यसंहिताप्रभृतिग्रन्थेभ्यो मन्त्रतो रूपतो विलक्षणाऽपि वैदिकसन्ध्यापद्धतिर्मन्त्राणां विनियोगक्रमस्य सौष्ठवेन विनियोगस्य कर्मानुरूप्येण च सर्वेभ्यः सन्ध्यापद्धत्यन्तरेभ्यः प्रशस्ततमेति विज्ञायते। नह्यस्यां वैदिकसन्ध्यापद्धतौ यो मन्त्रो यत्र विन्यसितव्यस्तत्र न विन्यस्यते, यस्मिन् वा कर्मणि विनियोक्तव्यस्तत्र न विनियुज्यते। न चैवंविधं मन्त्राणां विन्यासक्रमस्य सौष्ठवं विनियोगस्य कर्मानुरूप्यं च कुत्रचिन् सन्ध्यापद्धत्यन्तरेषु दर्शीदृश्यामहे। बह्व्यो हि सन्ध्यापद्धतयस्तथा बह्वृचानामेका, तैत्तिरीयाणामपरा, वाजसनेयकानामन्या, कौथुमानां पैप्पलादानां चान्याऽन्या, किं बहुना यावत्यः शाखासंहितास्तावत्यः सन्ध्यापद्धतयः। सर्वासु च तासु मन्त्राणां विन्यासक्रमो विषमः परस्परं प्रत्यक्षः। नह्यसौ नाम लोके कश्चिन् सन्ध्यापद्धतिविदामुत्तमो यः पश्यन्नेव तद्वैषम्यं प्रत्यक्षतो न प्रतिपद्यते। मन्त्राणां विनियोगस्य कर्मानानुरूप्यं च तत्र सर्वत्राचमनमन्त्रनिरीक्षणादेवाववोद्धुं पार्य्यते, नास्ति किञ्चिद्विशेषायासापेक्षा। यावन्तः खलु मन्त्रविनियोगविदो मेधाविनो जनाः सर्वे ते विनियोजकलिङ्गादेव मन्त्रविनियोगं कर्मानुरूपं मन्यन्ते। विनियोजकं लिङ्गं शब्दगतं भवेदर्थगतं वेति नास्ति कश्चिदाग्रहः। न च सन्ध्यापद्धत्यन्तरेषु सर्वत्राचमने कर्मणि यो यो मन्त्रो विनियुज्यते तत्राचमनवचनः कश्चन शब्दो विद्यतेऽर्थतो वाऽसौ कथञ्चिदाचमनमभिधत्ते। न चाचमनवचने शब्देऽविद्यमानेऽर्थतो वाऽऽचमनाभिधानाभावे मन्त्रस्य तस्याचमने कर्मणि विनियोगस्तदनुरूपः कर्हिचिदववोद्धुं शक्यते।

अननुरूप इति तु सर्वेषां तत्तत्सन्ध्यापद्धतिविदां सूक्ष्मदृशां पण्डितानां प्रत्यक्षम्। तत्र विनियोजकलिङ्गाभावेऽपि जायमानो मन्त्रविनियोगश्चेत्कर्मानुरूपो मन्येत, तदा सर्वः सर्वं मन्त्रविनियोगं कर्मानुरूपं मन्तुं क्षमः कृतमिह तद्विनियोगमर्य्यादाकथया निरर्थिकया। वैदिकसन्ध्यापद्धतौ चाचमने कर्मणि "**शं नो देवीरभिष्टय आपो भवन्तु पीतये**" इति मन्त्रो विनियुज्यते। तत्र "**आपो भवन्तु पीतये**" इत्युभयविधं विनियोजकं लिङ्गं प्रव्यक्तम्। अपामाचमनस्य स्फुटमभिधानात्। नह्यसौ मन्त्रो यथा शब्दतोऽपामाचमनमभिधत्ते तथाऽर्थतोऽप्यभिधत्त इति न प्रव्यज्यते। न च प्रव्यक्ते तस्मिन् जायमानस्तत्र तद्विनियोगः कर्माननुरूपः इत्युन्मत्तेनापि केनचिद्वक्तुमीश्यते, विगतमत्सरेण स्वस्थमतिना कोविदेनेति तु किमु वक्तव्यम्। तदिदं दिग्दर्शनमात्रम्। मन्त्रान्तरेषु तदनानुरूप्यस्य प्रेक्षावद्भिः स्वयमुत्प्रेक्षितुं शक्यत्वात्। न चैकमेवैतद्वैशिष्ट्यमस्यां वैदिकसन्ध्यापद्धतौ पद्धत्यन्तरेभ्यः, **किन्तर्हि?** वैशिष्ट्यान्तरमपि वरीवृत्यते। किन्तद्वैशिष्ट्यान्तरमिति चेत्? **अत्राचक्ष्महे** सर्वासु ह्यन्यासु तत्तच्छाखासन्ध्यापद्धतिषु तत्तच्छाखासंहिताभिमानिनस्त्रैवर्णिका अधिक्रियन्ते, भगवत्यामस्यां वैदिकसन्ध्यापद्धतौ च वेदसंहितामात्राभिमानिनः सर्वे ते वैदिका इति महदिदं वैशिष्ट्यम्। तत्तच्छाखासंहिताभिमानं च वसिष्ठप्रभृतयः स्मृतिकृतो विस्पष्टमामनन्ति। यत्रैतदुदाहृतं भवति "**पारम्पर्य्यागतो येषां वेदः सपरिबृंहणः। तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा**" (वसि० स्मृ० ६।४३) इति। नचैतादृक्षं तत्तच्छाखासंहिताभिमानं वैदिका बहुमूल्यमातिष्ठन्ते। तेषां दृष्टौ ह्येतदत्यल्पमूल्यकं कर्म। जातिदेशावनतिहेतुत्वात्। नूनमविद्याप्रभवोऽयं सर्वस्तत्तच्छाखासंहिताभिमानो नाम दुरभिमानः, तदुपाश्रयश्च निखिलो वर्तमानवेदसंहितापाठभेदः, तत्तत्सन्ध्यापद्धतिभेदश्च कुत्सितो भेदः। न च जीवतीनां जातीनां धर्मस्य पुस्तकं किञ्चिदनेकधा पाठभेदः स्वप्नेऽप्यध्यास्ते, नित्यं वा सन्ध्याकर्म कदाचित् सहस्रधा वेभिद्यते। जीवती चाद्यापि वैदिकी मनुप्रसूतिरेषा विशिष्टा जातिः। अतो

न साऽऽत्सीयधर्मपुस्तकस्य वेदसंहितायाः प्रतिमन्त्रमनेकधा पाठभेदं यथा-शक्यं सोढुं, सन्ध्यापद्धतिभेदं च श्रेयस्करमवगन्तुमुत्सहते। अविद्याप्रभव-त्वात्। अविद्यांचाविद्यावतां भूषणं न सर्गारम्भादेव विद्यावतामस्माकमिति दूरतस्त्यक्तव्योऽसौ तत्तच्छाखासंहिताभिमानो नाम दुरभिमानः, सम्पाद-यितव्यश्च वेदसंहितामात्राभिमानो नाम सुष्ठ्वभिमानः, अनुष्ठातव्यं च वैदिकसन्ध्यापद्धत्यैव नित्यशः सन्ध्याकर्म नित्यं, न भ्रमतोऽपि पद्धत्यन्तरेण श्रेयस्कामैर्वैदिकैरिति भृशमाशास्महे। नचाधुनिकेयं वैदिकसन्ध्यापद्ध-तिर्न नित्यकर्मानुष्ठानाय वैदिकानामुपादानमर्हतीति शङ्कितुं शक्यते। प्रचाराधुनिकत्वेऽपि रूपतोऽनाधुनिकत्वात्। यथा चैषा वैदिकसन्ध्याप-द्धतिः प्रचाराधुनिकत्वेऽपि रूपतोऽनाधुनिका, तथा वयं द्वितीयावृत्तौ सोपपत्तिकं सप्रमाणं च विस्तरेण वर्णयिष्यामहे।

अस्ति खलु वैदिकानां नित्येषु पञ्चसु महायज्ञेषु **ब्रह्मयज्ञो** नाम ज्येष्ठो महायज्ञः, यं किल **"स्वाध्यायः"** इत्याचक्षते। यत्रैतच्छ्रुतं भवति **"स्वाध्यायो वै ब्रह्मयज्ञः"** (शतप० ११।३।५।३) इति। तत्र स्वाध्यायो वेदाध्ययनम्। अध्ययनमध्यायः, सुष्ठ्वध्यायः स्वाध्याय इति तद्व्युत्पत्तेः। **"अन्येषामपि दृश्यते"** (अष्टा० ६।३।१३७) इति दीर्घः। मध्ये वाऽऽङः प्रक्षेप इति (अष्टा० ७।३।४)सूत्रे कैयटः। अभ्यु-दयनिःश्रेयसफलवत्त्वं च वेदाध्ययने सौष्टवम्। प्रत्यहं यथाविधि विधी-यमानं खलु वेदाध्ययनं नियमेनाभ्युदयं निःश्रेयसं च फलं सम्प्रयच्छति **"यावन्तं ह वा इमां पृथिवीं वित्तेन पूर्णां ददल्लोकं जयति, त्रिस्तावन्तं जयति, भूयांसं वाऽक्षय्यम्, य एवं विद्वानह-रहः स्वाध्यायमधीते"** (शतपथ० ११।३।८।३) इति श्रुतेर्न तद-न्याध्ययनं नियमेनेति तदन्तराशयः। स्वो वाऽध्यायः स्वाध्याय इति तद्व्युत्पत्तिः। वेदादन्यस्याध्ययनं हि परेणापि विधीयमानं कथञ्चित् स्वाध्ययनं मन्तुं शक्यते, वेदाध्ययनं तु स्वेनैव विधीयमानं स्वाध्ययनमिति तदभिप्रायः। वेद इति शास्त्रान्तरोपलक्षणम्। अत एवाह भगवान् मनुः **"बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च। नित्यं**

शास्त्राण्यवेक्षेत निगमाँश्चैव वैदिकान्" (मनु० ४।१९) इति। यत्तु स्वशाखावेदाध्ययनं स्वाध्याय इति केषाञ्चिद् वसिष्ठादिस्मृत्युपाश्रयं व्युत्पादनम्। तदति फल्गु। सङ्कोचे प्रमाणाभावात्। "तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः। वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना" (मनु० २।१६५) इति मानववचोविरोधेन स्मृत्यन्तराप्रामाण्यस्य वक्तुं शक्यत्वात्। प्रबलं च मानवं वचो वचोऽन्तरेभ्यः सर्वदा सर्वत्र "मनुर्वै यत्किञ्चिद्वदत् तद्भेषजं भेषजतायै" (ताण्ड्यब्रा० २३।१६।७) इति श्रुतेर्निर्विवादम्। न च तत्स्वाध्यायशब्दं वेदाध्ययनं विचक्षणोऽपि कश्चित् प्रतिदिनं कार्त्स्न्येन विधातुं चङ्क्रम्यते। मन्त्रपाठभूयस्त्वात्। अध्ययनं च प्रतिदिनं कार्त्स्न्येन भगवतो वेदस्यावश्यकम्। "स्वाध्यायोऽध्येतव्यः" (शत० ११।३।८।३) इत्यविशेषेण तद्विधिश्रुतेः, अध्ययनाभावे प्रत्यवायापत्तेश्च। तदिदमालोचयन्तः किलास्मत्पूर्वपुरुषास्तत्रभवन्तो वेदार्थविदो महर्षयः समग्रस्य भगवतस्तस्य प्रत्यहं नियमेन कृत्स्नतोऽध्ययनाय कृपया परया सारभूतं मुख्यमर्थं सन्ध्यामन्त्रैरेभिः सञ्जगृहुः, समग्रान् वा वैदिकान् मन्त्रान् सन्ध्यामन्त्रैरेभिः सञ्चुकुचुः, सायंप्रातः प्रत्यहं विधितस्तदध्ययनेनैव च सकलवेदाध्ययनं हन्तकारप्रदानेनातिथियज्ञानुष्ठानमिव कथञ्चिन्मनसि चक्रुरिति महतां परामर्शः। सोऽयं तत्रभवद्भिरस्मत्पूर्वपुरुषैर्महर्षिभिः सन्ध्यामन्त्रैः सङ्गृहीतः सारभूतो मुख्यो वैदिकोऽर्थः सङ्कुचितो वा वैदिको मन्त्रनिचयो वैदिकसन्ध्यापद्धतावेव सर्वाङ्गपूर्णं राराज्यते न सन्ध्यापद्धत्यन्तरेषु कुत्रचिदिति भूरिवैशिष्ट्यमिदं भगवत्यामस्यां वैदिकसन्ध्यापद्धतौ पद्धत्यन्तरेभ्यः। तदेवं बहुविधं वैशिष्ट्यं नाम सर्वाङ्गसौन्दर्य्यं समाश्रयन्ती सत्यप्येषा वैदिकसन्ध्यापद्धतिकामिनी किञ्चिज्ज्योतिर्मयभाष्यभूषणानलङ्कृता भवन्ती नात्मप्रियाणामन्तर्धियां वैदिकानां मनोमुदमजीजनत्, अल्पविदल्पश्रुतविनिर्मितैरनेकविधकैर्व्याख्यानकल्पैः कार्ष्णायसाभूषणैराच्छादिताखिलगात्रा भवन्ती च भवती शबरयोषितेव नागराणां, द्रष्टुमनसां केषाञ्चिदन्येषामपि नेत्रपद्मानि नातीतृपत्, सर्वत्र

सर्वतः प्रकाशितव्यं प्रत्यङ्गमात्मवैशिष्ट्यं च ज्योतिरभावे वणिगिव मणि-मौक्तिकप्रवालादिद्रव्यजातमंशतोऽपि न जातु प्राचकाशत्, प्रत्युताभिव्यक्त-लिङ्गा विधातृकेवाम्र्यंकुमारिका पुरुषमात्रादनवशेषेण तत्सर्वं प्राचिच्छदत्। तदेतदपमानमिव भगवत्यास्तस्या अभिमन्यमानैरस्माभिः सर्वाङ्गदीप्तिकरं ज्योतिर्मयं दिव्यं भाष्यभूषणं निर्मातुमुदयुञ्जि। भगवतो वेदपुरुषस्य वेदि-पुरुषस्य च परमानुग्रहेण तूर्णं तादृक्षं भाष्यभूषणमेकं यथामति निर्माय श्रद्धापूर्वकमा मूर्ध्न आ च पादतलान् सर्वं शुद्धतमं दर्शनप्रियं तद्गात्रं सम-लमकारि। घृणास्पदभूतानां व्याख्यानान्तरकार्ष्णायसाभूषणानां चोपयोगो मात्रयाऽपि न पर्य्यशेषि, यथायथं प्रकाशितव्यं निखिलाङ्गवैशिष्ट्यं च भग-वत्यास्तस्या यथासामर्थ्यं सर्वशः पदे पदे प्राकाशि। तदिदमिष्टं विशिष्टं सरलं सरसं मामकं वैदिकसन्ध्यापद्धतिभाष्यं वेदार्थतत्त्वविदो विवेकिनो विद्वांसो माध्यस्थ्यधिया यथावकाशं पश्यन्तु, पठन्तु पाठयन्तु च स्वाध्या-यबुद्धयो धर्मानुष्ठानमतयो व्रतिनो देशिकाश्च प्रतिदिनं यथाविधि निर-न्तरम्, तुष्यतु च तेन सततं विश्वमूर्तिर्भक्तवत्सलो भगवान् वेदिपुरुषो वेदपुरुषश्चेति मुहुर्मुहुर्मनसा वाण्या च साञ्जलि सम्प्रार्थयामहे॥



# अथ शुद्धाशुद्धम् ।

| पृष्ठं | पङ्क्तिः | अशुद्धं | शुद्धम् |
|---|---|---|---|
| ६ | १७ | भर्तो यो असै | मर्तो यो असै |
| ६ | २३ | भर्तः=भर्तव्यो | मर्तः=मर्तव्यो |
| ८ | १ | प्रत्यवायस्याविशेषात् । | प्रत्यवायस्याविशेषादिति । नैतद्वक्तव्यम् । निमित्तभेद-प्रत्यवायभेदाभ्यां विशेषात् । |
| १० | १८ | भाषात्मकं पद्यम् । | गाथात्मकं पद्यम् । |
| १३ | ४ | ब्रह्म ! | ब्रह्मन् ! |
| १६ | १७ | ब्रह्म ! | ब्रह्मन् ! एवमग्रेऽपि सम्बोधनेषु सर्वत्र वेदितव्यम् । |
| २२ | १० | प्राणं भविष्यतीति | प्राणं पोपविष्यतीति |
| २५ | १० | वज्रं शीर्षणि क्रतुम्" | वज्रं भरति शीर्षणि क्रतुम्" |
| ३८ | १९ | सोऽयं दिशोरधिपत्योरक्षकयोश्च | सोऽयं दिशोरधिपत्योश्च |
| ३९ | १७ | पितृयानाख्यां | पितृयाणाख्यां |

अन्यद् यथामति स्वयं
संशोध्यम्





# अथ वैदिकसन्ध्यावैदिकभाष्यम्



सूर्य्यं चन्द्रमसं दिवं च पृथिवीं व्योम ग्रहं तारकं,
जीवानामुपभोगसाधनमिदं भोग्यं च नानाविधम्।
सर्गादौ विदधाति कर्मफलदो धाता विधाता स्वयं,
सत्यानन्दचिदात्मको गुरुवरो यस्तं नुमोऽहर्निशम् ॥१॥

ध्यात्वा वैदिकसिद्धान्तं ध्यात्वा च वेदपूरुषम्।
भाष्यं वैदिकसन्ध्यायाः क्रियते वैदिकाभिधम् ॥ २ ॥

सन्ध्या किं श्रौतं कर्म स्यादहोस्वित् स्मार्तम्? । श्रुत्या विहितं **श्रौतं**, स्मृत्या विहितं **स्मार्तम्** । स्मार्तमिति ब्रूमः । किं कारणम्? यत्कारणं श्रुतौ तद्विधानं नोपलभ्यते, स्मृतौ च तद्विधानमुपलभामहे । अस्ति तावत् स्मृतौ तद्विधानं सुव्यक्तम् **"यज्ञोपवीती नित्योदकः सन्ध्यामुपासीत वाग्यतः"** ( आश्व० गृ० ३।७।३ ) इत्येवञ्जातीयकम् । **यज्ञोपवीती**=यत्र दक्षिणं बाहुमुद्धरते सव्यमवधत्ते तदुपवीतं यज्ञोपवीतं, तद्वान् । **नित्योदकः**=नियतस्नानाचमनादिकः, नित्यं नियतमुदकं स्नानाचमनादिक्रियायै यस्य, स तथेति तद्व्युत्पत्तेः । न च स्मृतौ तद्विधाने विद्यमाने श्रौतं कर्म सन्ध्येति कथञ्चिदास्थातुं शक्यते । स्मार्तत्वे तस्य च नास्ति कश्चित् सन्देहः । तस्मात् स्मार्तं सन्ध्याकर्मेति निश्चितम् । **नैतद्वक्तव्यम्** । स्मृतौ तद्विधाने श्रुतौ तद्विधानस्यार्थिकत्वात् । यस्य खलु कर्मणः स्मृतौ विधानं विद्यते, श्रुतौ तद्विधानमर्थादापद्यते । नहि स्मृत्या स्वतन्त्रं किञ्चिद् विधीयते । किन्तर्हि? यद् यद् विधीयते तत् सर्वं श्रुत्यर्थमनुसृत्य विधीयते । किं कारणम्?

यत्कारणं श्रुत्यर्थमनुसरन्ती सा किञ्चिद् विदधती प्रामाण्यमश्नुते, अन्यथा चाप्रामाण्यम्। मनुष्यकर्तृकत्वात्। मनुष्यकर्तृका खलु स्मृतिः। मनुष्याश्च सततं प्रकृतिवशगाः। तत्र स्वभावतो भ्रमप्रमादादयो दोषाः सम्भाव्यन्ते। तत्कर्तृका चेत्स्मृतिः श्रुत्यर्थमननुसरन्ती वर्तेत, तदाऽनृतव्याघातादिभिर्दोषैर्न जातु परिमुच्येत। नहि यस्याः कर्तारो भ्रमप्रमादादिदोषदूषितचेतस्का वर्तन्ते तत्कर्तृका स्मृतिरनृतव्याघातादिभिर्दोषैरात्मानं परिमोचयितुं कथञ्चिदीष्टे। अपरिमुच्यमाना च नूनं जह्यात् प्रामाण्यमश्नुवीत चाप्रामाण्यम्। अनृतव्याघातादिदोषाणामप्रामाण्यहेतुत्वस्य सर्वसम्मतत्वात्। अत एव ब्राह्मणानामैतरेयप्रभृतीनां प्रामाण्यं सिषाधयिषुस्तत्रभवान् गोतमो मुनिः पूर्वन्तावत् पूर्वपक्षसूत्रं सूत्रयाम्बभूव "**तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः**"। (न्या० २। १ ५७।) इति। न च श्रुत्यर्थप्रचाराय प्रवर्तमानानामाश्वलायनप्रभृतीनां मुनीनां स्मृतिरेषा श्रुत्यर्थाननुसारिणी स्वप्नेऽपि सम्भावयितुं शक्यते, किं पुनरभ्युपगन्तुम्। श्रुत्यर्थानुसारित्वे च तस्याः श्रौतं कर्म सन्ध्या न स्मार्तमिति सुखेनापन्नम्। यदुक्तं श्रुतिविधानानुपलम्भ इति। तन्न युक्तमुच्यते। तद्विधायिकायाः श्रुतेर्विद्यमानत्वात्। विद्यते तावत् सन्ध्याकर्मविधायिका श्रुतिः "**उप त्वाऽग्ने दिवे दिवे दोषावस्तर्धिया वयम्। नमो भरन्त एमसि** (ऋ० १। १। ७।) इति। **अग्ने**= अग्निरग्रणीः, अनुशास्ता गुरुरिति यावत्, तत्सम्बोधने हे मनुष्याणामस्माकमग्रणीर्जगद्गुरो परमात्मन्! **दिवे दिवे**=अहरहः प्रतिदिनं **दोषावस्तः**=रात्रावहनि रात्रिन्दिवयोः सन्धौ सायंप्रातः **धिया**=मनसा त्वदेकचेतसा **नमो भरन्तः**=नमस्कारं सम्पादयन्तो "**नमः शम्भवाय च मयोभवाय च**" (यजु० १६। ४१) इत्यन्तं मन्त्रजातमुच्चारयन्तो **वयं**=त्वत्पुत्राः सर्वे वयं मनुष्याः, **त्वा**=त्वामन्तरात्मानं भगवन्तम्-**उप+एमसि**=लेटो रूपम्, "**इदन्तोमसि**" (अष्टा० ७। १ ४६) इति मस इः। उपागच्छाम उपास्महे, उपागच्छेम, गुरुमन्त्रेण गायत्र्योपासीमहीत्यर्थः। सत्यपि विधौ दर्शादिकेऽन्यस्मिन् कर्मणि जाय-

मानः कथञ्चित् प्रमादः क्षन्तुं पार्य्यते, न पुनरस्मिन् सन्ध्याकर्मणि कर्हिचिदिति द्योतयितुमुत्तमपुरुषप्रयोगः । हे अग्ने ! सन्ध्योपासनगोचरभवन्नियोगाश्रया वयं जाताः स इति तत्प्रयोगार्थः । यौष्माकीणाः पूर्वजाः कायेन वाचा मनसा यथासामर्थ्यं विधिपरिपालनाय सन्ध्याकर्मणि यथाकालमवतिष्ठन्ते स्म, तत्तनयैर्युष्माभिरपि यथासामर्थ्यं तत्परिपालनार्थं तत्र यथावेलमवस्थातव्यमिति तत्प्रयोगाशयः । यस्त्वेष सिद्धान्तो मन्त्रेषु पठ्यमानो विधिरुत्तमपुरुषप्रयोगाद् विधित्वं बाधित्वाऽभिधायकत्वमवलम्बत इति, स सत्यामन्यत्र विधिश्रुतौ बोद्धव्यो न सर्वत्र । सन्ध्याकर्मणि मुख्यो गायत्रीमन्त्रः । नमोमन्त्रान्तानि च मन्त्रान्तराणि तदङ्गानि । न चाङ्गैर्विनाऽनुष्ठीयमानं किञ्चित् कर्म फलायावकल्पते । अतो मुख्यवदङ्गानुष्ठानमपि तत्रावश्यकमित्येतदवबोधयितुमाम्नायते **"नमो भरन्त एमसि"** इति । सूक्ष्मतमो जगतां गुरुरीश्वरोऽग्निः । अन्तरात्मत्वात् । न चान्तरात्मानं सूक्ष्मतमं भगवन्तं बाह्यात्मानः संसारिणो जनाः किञ्चिद् द्वारमनपेक्ष्य सहसोपागन्तुं शक्नुवन्ति । द्वारं च सुगमं न गायत्रीमन्त्रतोऽन्यत् किञ्चिदुदाहर्तुं शक्यते । द्वारान्तराणां सर्वेषां तदपेक्षया दुर्गमत्वस्य प्रत्यक्षत्वात् । ओमिति च तदानीं गायत्रीमन्त्रान्तर्गतत्वादनुदाहरणम् । गायत्रीमन्त्रस्य प्रतिदिनं संसारिणां मनुष्याणां भगवति तस्मिन्नात्मोपागमने द्वारत्वं चोत्तरमीमांसायां सूत्रयाम्बभूव सूत्रकृद् भगवान् बादरायणो मुनिः **"छन्दोऽभिधानान्नेति चेन्न, तथा चेतोऽर्पणनिगदात्"** ( वे० १ । १ । २५ ) इति । **"गायत्री वा इदं सर्वम्"** ( छां० ३ । १२ । १ ) इति गायत्रीच्छन्दसः पूर्वत्राऽभिधानात् **"यदतः परो दिवो ज्योतिः"** ( छां० ३ । १३ । ७ ) इत्युत्तरस्मिन् ज्योतिर्वाक्ये ज्योतिश्शब्दं ब्रह्म नेति चेन्न, यथा प्रणवेन तथा गायत्रीच्छन्दसा जगद्गुरौ ब्रह्मणि चेतसोऽर्पणस्योपागमनस्य निगदादभिधानादुत्तरस्मिन् ज्योतिर्वाक्ये ज्योतिश्शब्दं ब्रह्म युक्तमिति सूत्रार्थः । यद् द्वारं तन्मुख्यं, तत्साहाय्यमाचरदन्यत् सर्वं चामुख्यमिति सार्वत्रिको नियमः । तस्माद् विधीयमानेऽस्मिन् सन्ध्या-

कर्मणि मुख्यो गायत्रीमन्त्रो, नमोमन्त्रान्तानि च सर्वाणि मन्त्रान्तराणि तदङ्गानीति साधु प्रतिपद्यामहे ।

अस्ति च छन्दोगानां ब्राह्मणशेषे षड्विंशब्राह्मणेऽपि सन्ध्याकर्मविधायिका श्रुतिः **"तस्माद् ब्राह्मणोऽहोरात्रस्य संयोगे सन्ध्यामुपास्ते"** ( षड्विंशब्रा० ४।५ ) इति। **ब्राह्मणः**=ब्रह्म वेदः, तत्परोऽधिकारी जनः । **उपास्ते**=लेटो रूपम्, उपासीत । अध्वरमीमांसकास्तु सन्ध्याकर्मविधाने **"अहरहः सन्ध्यामुपासीत"** इति शाखान्तरीयब्राह्मणश्रुतिमुदाहरन्ति । साऽपि मान्त्रवर्णिकश्रुतिमूलत्वादिह प्रमाणं निर्बाधम् । न चैतावत्सु सन्ध्याकर्मविधायकेषु श्रुतिवचस्सु सत्सु सन्ध्याकर्म स्मार्तं न श्रौतमिति वचः कथञ्चिच्छ्रद्धातुमुत्सह्यते । **अथोच्येत**—सन्ध्याकर्मणि तावदुपनीतस्याधिकारः । उपनयनं च स्मार्तः संस्कारविशेषः । स्मृतिषु सर्वत्र तद्विधानोपलब्धेः । यत्रैतदुदाहृतं भवति **"वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यम्"** ( आप० धर्म सू० १।१।१९ ) इति । न च यत्कर्माधिकारसम्पादकः संस्कारः स्मार्तस्तत् कर्म न स्मार्तमिति कथञ्चिद् घटते । तस्मात् स्मार्तं सन्ध्याकर्म न श्रौतमिति । **नैतद् वक्तव्यम्** । दत्तोत्तरत्वात् । दत्तं ह्यस्योत्तरं पुरस्ताद्-यस्य स्मृतौ विधानं विद्यते श्रुतौ तद्विधानमर्थादापद्यत इति । तदिह न विस्मर्तव्यम् । उपनयनं च श्रुतिसिद्धः संस्कारविशेषः श्रुतिदर्शनेन निःसंशयं प्रतिपद्यते, नास्ति तत्र मात्रयाऽपि स्मार्तप्रतिपत्तिगन्धावकाशः । दृश्यते च तत्प्रतिपादिका मान्त्रवर्णिकी श्रुतिः **"अभि द्विजन्मा त्री रोचनानि विश्वा रजांसि शुशुचानो अस्थात् । होता यजिष्ठो अपां सधस्थे"** ( ऋ० १।१४९।४ ) इति । **द्विजन्मा**=जातोपनयनसंस्कारो माणवकः, प्रथमं मातापितृभ्यां, द्वितीयमाचार्यादिति द्वे जन्मनी यस्य स तथेति तद्व्युत्पत्तेः । शरीरेण माणवकं मातापितरौ जनयतः, तमेवोपनयनसंस्कारेण चाचार्य्यः । यत्रैतच्छ्रुतं भवति **"आचार्य्य उपनयमानो ब्रह्मचारिणम्"** ( अथर्व० ११। ७।३ ) इति । स्मृतं च **"स हि विद्यातस्तं जनयति १८ तच्छ्रेष्ठं**

**जन्म १६ शरीरमेव मातापितरौ जनयतः"** १७ (आपस्त० धर्मसू० १।१।१५–१६–१७) इति। **त्री**=त्रीणि, मातृकुलं पितृकुलमाचार्यकुलमित्येतानि त्रीणि कुलानि **रोचनानि**=विद्यया श्रिया यशसा दीप्तिमन्ति, व्यावहारिकं पारमार्थिकं च ज्ञानं **विद्या**, धनधान्यसम्पत्तिः **श्रीः**, वीरकर्मजन्या कीर्तिर्**यशः**, प्रसिद्धिर्**दीप्तिः**, **विश्वा**= विश्वानि **रजांसि**=लोको रजः, सर्वाँल्लोकान् जानपदाँश्च मनुष्यान् **अभिशुशुचानः**=अभितः सर्वतस्तपसा विद्यया च दीपयमानो **होता**= जगद्गुरोरीश्वरस्य गुरुमन्त्रेण गायत्र्या प्रत्यहं सायंप्रातर्होता **यजिष्ठः**= अतिशयेन तदेकचित्तेन तत्रात्मसाङ्गत्यमात्माविभागं विदधानः सम्पादयमानोऽ**पां**=स्रवन्तीनां पावनीनामपां **सधस्थे**=समीपे शुचौ प्रदेशेऽ**स्थात्**="छन्दसि लुङ्लङ्लिटः" (अष्टाध्या० ३।४।६) इति विधौ लुङ्, तिष्ठेदित्यर्थः। **"ब्रह्मचर्य्यमगामित्याह। ब्रह्मण एवैतदात्मानं निवेदयति। ब्रह्मचार्य्यसानीत्याह। ब्रह्मण एवैतदात्मानं परिददाति। अथैनमाह को नामासीति। प्रजापतिर्वै कः। प्राजापत्यमेवैनं तत्कृत्वोपनयते"** (शत० ११।५। ४।१) इति च ब्राह्मणश्रुतिः। न चैवमुपनयनस्य श्रुतिसिद्धत्वे सन्ध्याकर्माश्रौतं साधयितुं शक्यते। तस्माच्छ्रौतं सन्ध्याकर्म न स्मार्तमिति सुदृढं मनसि कर्तव्यो वैदिकः सिद्धान्तः।

अथेदं सन्ध्याकर्म नित्यं स्यादाहोस्विदनित्यमित्यपरो विचारः। यद् यथाकालमवश्यकर्तव्यं तन्नित्यम्, यद् यथारुचि कर्तव्यं तदनित्यम्। तत्रानित्यमिति पूर्वः पक्षः, नित्यमिति सिद्धान्तः। किन्तावत् प्राप्तम्? अनित्यमिति वच्मः। निष्फलत्वात्। यस्य खलु कर्मणो विधिप्रदेशे किञ्चित् फलं न पठ्यते तन्निष्फलम्। न च यन्निष्फलं तदवश्यकर्तव्यं मन्दोऽपि कश्चिदनुमन्यते, प्रेक्षावानिति तु किमु वक्तव्यम्। सन्ध्याकर्म च निष्फलं सुव्यक्तम्। नहि तद्विधिप्रदेशे फलं किञ्चिदाम्नायते। अतएव च **"फलसम्बन्धशून्यतया नियतनिमित्तेन विहितं कर्म नित्यम्"** इति नित्यस्य कर्मणो लक्षणं प्रववृतेऽध्वरमीमांसकानाम्।

न च यथारुचिकर्तव्यत्वे सन्ध्याकर्म नित्यं भवितुमर्हति। तस्मादनित्यं सन्ध्याकर्मेति युक्तम्। **नैतद्वक्तव्यम्।** निष्फलत्वाभावात्। सत्यं विधिप्रदेशे सन्ध्याकर्मणो न किञ्चित्फलं पठ्यते, तथापि नैतावता सन्ध्याकर्म निष्फलमिति वक्तुमीश्यते। किं कारणम्? यत्कारणं जगद्गुरुरीश्वरस्तावदाज्ञापयति सन्ध्याकर्म। न च स पुत्रवदिमाः सर्वाः प्रजाः पालयन् निष्फलं कर्म किञ्चित् कर्हिचिदाज्ञापयितुमर्हति। किं न पश्यति भवान् यदा लौकिकेश्वरा अपि स्वीयाः प्रजाः पालयन्तो न निष्फलं कर्म किञ्चिदाज्ञापयन्ति तदा करुणावरुणालयो जगद्गुरुरीश्वरः कथमाज्ञापयिष्यति। कुतस्तर्हि सन्ध्याकर्मणो विधिप्रदेशे किञ्चित् फलं न पठ्यते?। **लौकिकत्वाभावात्।** एषा हि विधिप्रदेशे सर्वत्र फलाम्नानपद्धतिः—यस्य खलु कर्मणः स्त्रीपुत्रधनधान्यपशुभृत्यभूप्रभृतिस्वर्गान्तं लौकिकं किञ्चित् फलं विद्यते, तत् तस्य विधिप्रदेशे पठ्यते, यस्य पुनरन्तःकरणशुद्ध्या ज्ञानप्राप्तौ मोक्षो नामालौकिकं फलं, तद्व्यतिरिक्तं लौकिकं चानुषङ्गिकं छायागन्धवदाम्रस्य, तन्न तत्राम्नायते। सन्ध्याकर्मणश्च फलमलौकिकं, लौकिकं तु छायागन्धवदाम्रस्यानुषङ्गिकमिति सनातनो राद्धान्तः। यत्रैतदाम्नातं भवति **"अयं स होता यो द्विजन्मा विश्वा दधे वार्य्याणि श्रवस्या। मर्तो यो अस्मै सुतुको ददाश"** (ऋ० १।१४९।५) इति। **यः**=यो माणवको **द्विजन्मा**=जातोपनयनसंस्कारः **सोऽयं**=स एष **होता**=प्रतिदिनं सायंप्रातः शास्त्रविधिना गुरुमन्त्रेण गायत्र्या जगद्गुरोरीश्वरस्यानन्यचेतसा ह्वाताऽभिध्याता **विश्वा**=विश्वानि **श्रवस्या**=श्रवस्यानि यशस्यानि **वार्य्याणि**=वरणीयानि लौकिकानि फलानि **दधे**=धारयते लभतेऽश्नुते। **यः**=योऽयं **सुतुकः**=यथाशास्त्रं विधिपरिपालनाद् जगत्पितुरीश्वरस्य सुपुत्रो **मर्तः**=मर्त्यो माणवकोऽ**स्मै**=तस्मै **ददाश**=ददाति नूनमभिध्यानावर्जितः स भगवान् मोक्षमित्यर्थः। **"उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते"** (तै० आ० २।२।२) इति च। **उद्यन्तम्**=उदयं प्राप्नुवन्तम**स्तंयन्तम्**=अस्तमयं गच्छन्त**मादित्यं**="कालाध्वनोरत्यन्तसंयोगे"

( अष्टा० २।३।५ । ) इति द्वितीया, सूर्य्यस्योदयवेलायामस्तमयवेलायां च **कुर्वन्**=स्नानाचमनादिकं विदधद् **अभिध्यायन्**=गुरुमन्त्रेण गायत्र्या सूर्यान्तरात्मानं जगद्गुरुमीश्वरमभितश्चिन्तयन् **सकलं**=सर्वाङ्गपूर्णं **भद्रं**=कल्याणं मोक्षमश्नुते=भुङ्क्ते प्राप्नोतीत्यर्थः । न चैष श्रुतिसिद्धः सनातनो राद्धान्तः शक्यः केनचिदपह्नोतुम् । तस्मात् सन्ध्याकर्म निष्फलमिति रिक्तं वचः । **अथोच्येत**—फलवत् सन्ध्याकर्मेति नायं सदातनो राद्धान्तः, अध्वरमीमांसकैरनभ्युपगमादिति । **नैतद्वक्तव्यम्** । तदनभ्युपगमस्य लौकिकफलाभिप्रायकत्वात् । यथा खलु काम्यानां नैमित्तिकानां च कर्मणां लौकिकं तत्तत्फलं किञ्चिद् वेविद्यते तथा नास्ति सन्ध्याकर्मणो नित्यस्यैकान्तेन लौकिकं किञ्चित् फलमित्येष हि तदनभ्युपगमाभिप्रायो न पुनरस्य किमपि फलं न विद्यत इति । सोऽयमायुष्मता नावबुद्ध इत्यस्थाने नूनं तावकं प्रत्युत्थानम् । **ननु च** फलवच्चेत् सन्ध्याकर्म विद्येत, तदा काम्यकर्मतो न विशिष्येत । फलवत्त्वाविशेषात् । **न** । विधिप्रदेशे फलाम्नानानाम्नानाभ्यां विशेषस्य प्रव्यक्तत्वात् । काम्यानां कर्मणां हि विधिप्रदेशे सांसारिकं तत्तत्फलं किञ्चिदाम्नायते, सन्ध्याकर्मणो विधिप्रदेशे च न किमपि फलमाम्नायते । सोऽयमुभयोः प्रव्यक्तो विशेषः । कृपणाः खलु कामिनस्तत्तत्सांसारिकार्थकामनोपहतविवेकचक्षुषो विधिप्रदेशेषु सर्वत्राम्नातं फलमेवैकं पश्यन्तो यथाकथञ्चिद् हतोत्साहाः प्रवर्तन्ते । न हि तेषामस्ति स्वप्नेऽपि विधिपरिपालनमुद्देशः । ब्राह्मणाः पुनर्ब्रह्मेप्सवः संसारिकार्थकामनाविरहात् सततमुन्मीलितविवेकचक्षुषो विधिप्रदेशेषु सर्वत्र विधिमेवैकमवलोकयन्तो यथासमयं परमोत्साहेन वर्त्तन्ते । सुदृढो हि तेषामेष विश्वासः—प्रसन्ने जगद्गुरौ भगवति परब्रह्मणि परमेश्वरे नास्ति नृणां भुवि नाम किञ्चिदलभ्यम् । तत्प्रसादोपायश्च केवलं लौकिकेश्वराणामिव शास्त्रविधिपरिपालनमिति तदेव तेषां नित्यमुद्देशः । सोऽयमुभयोः प्रवृत्तौ विशेषः । न चैवंविधे विशेषे विद्यमाने काम्यकर्मणः सकाशान्नित्यस्य सन्ध्याकर्मणोऽविशेषः शङ्कितुं शक्यते । **अथोच्येत**—मा नाम भूत् काम्येन कर्मणा सन्ध्याकर्मणोऽविशेषः, नैमित्तिकेन कर्मणा

स्यात् । करणे निमित्तस्याकरणे च प्रत्यवायस्याविशेषात् । नैमित्तिकस्य कर्मणः करणे हि निमित्तं पुत्रजन्मगृहप्रवेशादिकं, सन्ध्याकर्मणः करणे च प्रत्यहं सायंप्रातः । नैमित्तिकं कर्माकुर्वाणः प्रत्यवायी भवन् लोके गर्हां प्राप्नोति, सन्ध्याकर्माकुर्वाणश्च लोके परलोके चोभयत्र । यत्रैतत्स्मृतं भवति **"न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम् । स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः"** (मनु० २।१०३) शूद्रः=अनुपनीतः । **"सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत् कुरुते कर्म न तस्य फलभाग् भवेत्"** (दक्ष स्मृ० २।२०) **"उपतिष्ठन्ति वै सन्ध्यां ये न पूर्वां न पश्चिमाम् । व्रजन्ति ते दुरात्मानस्तामिस्रं नरकं नृप !"** (विष्णुपु० ३।११।१००) **"योऽन्यत्र कुरुते यत्नं धर्मकार्ये द्विजोत्तमः । विहाय सन्ध्याप्रणतिं स याति नरकायुतम्"** (कूर्मपु० १।२।१८।३१) इति । **प्रत्यवायः**=पापम् । स चेश्वराज्ञाभङ्गलक्षणापराधजन्य इति वैदिकाः । विहितकर्मानुष्ठानवेलायामनुष्ठानमकृत्वा यदन्यत् कायिकं वाचिकं मानसिकं वा कर्म किञ्चित् क्रियते तज्जन्यः, अनुष्ठानाभावस्याभावत्वेन कारणत्वानभ्युपगमादित्यध्वरमीमांसकाः । यत्रेदमाहुः कुमारिलभट्टपादाः **"स्वकाले यदकुर्वंस्तु करोत्यन्यदचेतनः । प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते"** इति । **स्वकाले**=विहितकर्मानुष्ठानकाले । **अन्यत्**=कायिकादिकं कर्म । **अचेतनः**=विवेकशून्यो मनुष्यः । **स**=प्रत्यवायः । **अभावेन**=विहितकर्मकरणाभावेन । करणमनुष्ठानम् । अभावकारणवादिनां च विहितकर्माकरणजन्यः स प्रत्यवाय इत्यन्यत्र विस्तरः । नैमित्तिकं कादाचित्कं, सन्ध्याकर्म च सार्वदिकमित्यपरो विशेषः । न चैवं निमित्तप्रत्यवायादिभिर्विशेषे नैमित्तिकेन कर्मणा सन्ध्याकर्मणोऽविशेषः कथञ्चिद युज्यते । विशेषे च नित्यं सन्ध्याकर्मेति निश्चितं मतम् ।

**स्यादेतत्**—नित्यं चेत् सन्ध्याकर्मास्थीयेत, तदा सूतकादावपि यथापूर्वं क्रियेत । यत्कर्म यथावेलमवश्यकर्तव्यं तन्नित्यमित्युक्तत्वात् । न

च सूतकादौ मन्त्राणामुच्चारणमिष्यते । अशुचित्वादिति । अत्र ब्रूमहे—सूतकादावपि क्रियेत यथापूर्वं सन्ध्याकर्म, नास्ति किञ्चिदवद्यम् । यत्कारणं मन्त्राणामुच्चारणे तात्कालिकी शुद्धिर्वैदिकैराश्रीयते । विशेषस्तत्रेयानेव-सूतके मृतके भये विक्षेपे च मन्त्राः सर्वे मनसोच्चारयितव्याः, ज्वरादौ च वस्त्रपरिवर्तनपूर्वकं तप्ताभिरद्भिराचम्य यथाकामम् । आवश्यकः सन्ध्याकर्मणि मुख्यतः काल इति सनातनः पन्थाः ।

अथ कोऽसौ सन्ध्याकालः? । ननु विधिश्रुतावेवोक्तः सायंप्रातरिति । न । व्यापकशब्दत्वात् । व्यापकशब्दौ खलु सायंप्रातरित्येतौ, न ताभ्यां सन्ध्याकर्मोपयुक्तः कश्चन निर्धारितः कालोऽभिधातुं शक्यते । नहि सायमित्युक्ते यथा सूर्य्यास्तमयादूर्ध्वः कालोऽधिगम्यते तथा पूर्वः कालो नावगम्यते, प्रातरित्युक्ते च यथा सूर्योदयादूर्ध्वः कालः प्रतिपद्यते तथा पूर्वः कालो नावबुध्यते । तस्मात् सन्ध्याकर्मोपयोगी कश्चिन्निर्धारितः कालो वक्तव्यो, येन सुखेन तत् कर्म यथाकालमनुष्ठीयेतेति । तदिदमुत्तरयितव्यम् । युक्ततरत्वात् । अत्राहुस्तावत् षड्विंशब्राह्मणकाराः **"तस्माद् ब्राह्मणोऽहोरात्रस्य संयोगे सन्ध्यामुपास्ते, स ज्योतिष्याज्योतिषो दर्शनात् सोऽस्याः कालः"** (षड्विंश० ४।५) इति । सूर्य्यज्योतिरारभ्य तारकाज्योतिरन्तः सायंसन्ध्याकालः, तारकाज्योतिरारभ्य सूर्यज्योतिरन्तः प्रातःसन्ध्याकाल इति तदभिप्रायः । तमिमं चोभयसन्ध्याकालं भगवान् मनुरप्यनुमन्यते **"पूर्वां सन्ध्यां जपँस्तिष्ठेत् सावित्रीमाऽर्कदर्शनात् । पश्चिमां तु समासीनः सम्यगृक्षविभावनात्"** (मनु० २।१०१) इति । **आ अर्कदर्शनात्**=अर्धास्तमिततारकाज्योतिरारभ्य सूर्योदयपर्य्यन्तम् । **सम्यगृक्षविभावनात्**=अर्धास्तमितसूर्य्यज्योतिरारभ्य स्फुटतारकोदयपर्य्यन्तम् । **केचित्तु** सकलसूर्य्यबिम्बास्तमयादूर्ध्वं तारकोदयात् पूर्वं सायंसन्ध्याकालः, कृत्स्नतारकास्तंगमनादूर्ध्वं सूर्य्यबिम्बोदयात् प्राक् प्रातःसन्ध्याकाल इति सङ्गिरन्ते । **वस्तुतस्तु** यावान् ज्योतिर्द्वयान्तरालकालः

सः सर्वः सन्ध्याकालः। तत्रार्धास्तमिते सूर्ये सायंसन्ध्या समारब्धव्या, तारकासु चार्धास्तमितासु प्रातःसन्ध्येति निर्धारितो वेदमार्गः।

अथैषोऽन्यो विचारः किमुपस्थितेऽस्मिन् निर्धारिते काले सन्ध्याकर्मणि वर्तमानेनार्थज्ञानपूर्वकमुच्चारयितव्याः सर्वे मन्त्राः, किमुतातत्पूर्वकमिति। तत्रातत्पूर्वकमिति पूर्वः पक्षः, तत्पूर्वकमिति राद्धान्तः। किन्तावत् प्राप्तम्? अतत्पूर्वकमिति निगदामः। अनपेक्षणात्। वाजसनेयिनां ब्राह्मणे तावद् वेदाध्ययनविधिः श्रूयते **"स्वाध्यायोऽध्येतव्यः"** (शत० ११।५।६।३) इति। वैदिकैः प्रत्यहं नियमेन यथावकाशं सोपनिषत्कस्य वेदस्य मन्त्रमयस्याध्ययनं कर्तव्यमित्यर्थः। पठनमध्ययनम्। तच्च गुरुमुखोच्चारणसदृशोच्चारणम्। न च तत्रार्थज्ञानमपेक्ष्यते। विनाऽप्यर्थज्ञानं सुखेन सम्भवात्। नहि यस्य पुरुषस्यार्थज्ञानं न विद्यते मन्त्रास्तेनोच्चारयितुं न शक्यन्ते। दाक्षिणात्याः किलोदाहरणमिह युक्ततरं पश्यामः। ते हि सर्वथा मन्त्रार्थानभिज्ञाः सन्तोऽपि केचन मन्त्रोच्चारणे भूरिदक्षा अवलोक्यन्ते। विधिशेषे च विहितमिदमध्ययनमभिव्याहरणशब्देनानूद्यमानं दृश्यते **"तस्मादप्यृचं वा यजुर्वा साम वा गाथां वा कुम्व्यां वाऽभिव्याहरेद् व्रतस्याव्यवच्छेदाय"** (शत० ११।५।७।१०) इति। **गाथा**=मनुष्याणां राजामात्यादीनां वृत्तस्याख्यापकं भाषात्मकं पद्यम्। **कुम्व्या**=आचारशिक्षापरं वाक्यम्। **अभिव्याहरणम्**=उच्चारणम्। तत्र च नास्त्यर्थज्ञानापेक्षेति सर्वजनीनम्। मन्त्राः किल स्वरूपेणैव पुण्यमूर्तयो विद्यन्ते। भगवद्वचनत्वात्। ते यथा श्रवणमात्रेण श्रद्धाधनान् वैदिकार्भकान् पोपूयन्ते, तथोच्चारणमात्रेणापि पवित्रीकर्तुं चक्षम्यन्ते, नास्ति संशयलवावकाशः। येषां मन्त्राणामेतादृशः स्वरूपमात्रे सामर्थ्यातिशयो वरीवृत्यते किं तदुच्चारणे स्यादायासमात्रकारिणाऽर्थज्ञानेन। तस्मादुपस्थिते सन्ध्याकाले सन्ध्याकर्मणि वर्त्तमानेनाधिकारिजनेन विनैवार्थज्ञानमुच्चारयितव्या मन्त्रा इति युक्तं निगद्यते। तदेतत् परिहर्तव्यम्। **अत्राभिदध्महे**—अभीष्टसिद्धेरर्थज्ञानमावश्यकम्। मन्त्राः किल मनुष्याणामभीष्टसिद्ध्यै सर्गारम्भे जज्ञिरे। न च ते तावदभीष्टं किञ्चित् साध-

यितुं क्षमन्ते यावदर्थतो न ज्ञायन्ते । न च मनुष्याणामस्ति तदुच्चारणमात्रमभीष्टम्, येनार्थज्ञानाभावेऽपि दाक्षिणात्यानामिव कीराणां तत्सिद्धिरनुमन्येत । पवित्रीकरणं च मन्त्राणामौत्पत्तिको धर्मो नार्थज्ञानप्रयोज्य इति तत्रार्थज्ञानापेक्षाभावेऽप्यभीष्टसिद्धौ तदपेक्षाऽवश्यं वेविद्यते । मनुष्याः खलु मन्त्राणामर्थं ज्ञात्वा तदनुकूलं रात्रिन्दिवा परिस्पन्दन्ते, परिस्पन्दमानाश्चेश्वरानुग्रहेणालौकिकं वा लौकिकं वा तत्तदभीष्टं नूनमुपसम्पद्यन्ते, तदिदं साम्प्रदायिकानां ब्राह्मणानां विज्ञानम् । न च वाजसनेयिनां ब्राह्मणे श्रूयमाणो विधिरेतदुल्लङ्घ्य तदुच्चारणमात्रं विधातुं पारयति । गुरुमुखोच्चारणसदृशोच्चारणमात्रं च नाध्ययनं, किन्तर्हि? अर्थज्ञानपूर्वकं गुरुमुखोच्चारणसदृशोच्चारणम् । विधिशेषे प्रयुक्तोऽभिव्याहारशब्दोऽप्यत्रैव पर्य्यवस्यति नोच्चारणमात्रे कीरोपमे । यत्कारणं निन्द्यते स सर्वत्र यः प्रत्यहं वेदमन्त्रानध्येति तदर्थं च न जानाति, प्रशस्यते च स सर्वत्र योऽध्येति च जानाति च **"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा"** (नि० १।१८) इति । **"यदधीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्"** (नि० १।१८) इति च । न च निन्दितस्याचरणं प्रशस्तस्य चानाचरणं युक्तम् । पातित्यप्रसङ्गात् । अतः सन्ध्याकर्मणि वर्तमानैर्वैदिकधौरेयैर्नियमतोऽर्थज्ञानपूर्वकमुच्चारयितव्याः सर्वे मन्त्राः, श्रद्धया गुरूपदिष्टमार्गेण चानुष्ठातव्यं यथाकालमेतत् सन्ध्याकर्म, स्यादनेनेदं भगवदनुग्रहसम्पादनेन निश्चितमपवर्गप्रदं तूर्णम् **"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवति"** (छां० १।३।१०) इति श्रुतेः । **विद्यया**=मन्त्रार्थज्ञानेन, **श्रद्धया**=परयाऽऽस्तिक्यबुद्ध्या, **उपनिषदा**=गुरूपदिष्टमार्गेण, **वीर्य्यवत्तरं**=फलप्रदाने बलवत्तरं निष्प्रत्यूहं त्वरितफलदमिति श्रुतिपदार्थः ।

**अथ** केयं सन्ध्या यत्र यथाकालं वर्तमानेनाधिकारिजनेनार्थज्ञानपूर्वकमुच्चारयितव्याः सर्वे मन्त्रा इति निर्दिधीयते? **अत्र** ब्रूमहे—

**अहोरात्रस्य या सन्धौ ब्रह्मोपासननामिका ।**
**प्रवर्तते क्रिया नित्यं सा सन्ध्या मुनिभाषिता ॥११॥**

रात्रेर्दिवसस्य च सन्धौ या ब्रह्मोपासननाम्नी क्रिया यथाशास्त्रं गायत्री-मन्त्रमुखेन वैदिकानां सततं प्रवर्तते, सा यथासम्प्रदायं वेदार्थमननकर्तृभि-र्मुनिभिः सन्ध्येति नाम्ना परिभाष्यते । **"सन्ध्यायन्ति सन्ध्यायते वा ब्रह्म यस्यां सा सन्ध्या"** इति कालपरत्वव्युत्पत्तौ च सन्ध्या-शब्देन तत्कालिका ब्रह्मोपासनक्रिया लक्ष्यते, यथा **"वसन्तादिभ्य-ष्ठक्"** ( अष्टा० ४।२।६३ ) इत्यत्र वसन्तशब्देन वसन्तकालिका वेदा-ध्ययनक्रिया, सहचारात् **"वसन्तसहचरितमध्ययनं वसन्तः"** इति भाष्योक्तेः । अन्यथा विध्यनुपपत्तेः । एतेन **"सन्धावुपास्यं ब्रह्म सन्ध्या"** इति व्युत्पादनमपि व्याख्यातं वेदितव्यम् । अन्यथा कालवदत्रापि विधानानुपपत्तेः । यथा खलु सन्ध्यापदस्य कालपरत्वे सन्ध्याविधिर्नोपपद्यते तथा ब्रह्मपरत्वेऽपि नोपपद्यते । सिद्धस्य विधातुम-शक्यत्वात् । क्रिया हि विधीयते न सिद्धं वस्तु । कालब्रह्मणी च सिद्धे वस्तुनी । तस्मादुक्तव्युत्पत्तिलभ्या ब्रह्मोपासनक्रियैव सन्ध्येति सर्वाङ्ग-सुन्दरम् ।

तदिदं सन्ध्याकर्म सायंप्रातराचमनादारभ्यते, नमस्कारे च परिसमा-प्यते । सायंकर्मणि स्नानस्य विकल्पः, प्रातःकर्मणि च नियमोऽन्यत्र ज्व-रादिभ्यः । तत्रोपस्थितेऽनुष्ठानकालेऽपां सन्निधौ शुचिप्रदेशे गत्वा प्रयतोऽ-भिषिक्तोऽनभिषिक्तो वा प्रक्षालितपाणिपादः सोत्तरीयो बद्धकच्छो बद्ध-शिखो यज्ञोपवीती कुशासने कम्बलासने भूमावेव वा समतलायां पद्मास-नेन सिद्धासनेन वा यथाभ्यासमुदङ्मुखः प्राङ्मुखो वा यथास्थानं सम-कायशिरोग्रीवो दृढमासीनो विस्मृतलोकाखिलव्यवहारो ब्रह्मैकमानसः पूर्वं तावदन्तरतः पूत्यर्थमाचमनमन्त्रमुच्चार्य्य ब्रह्मतीर्थेन त्रिराचामेत् । अथा-चमनमन्त्रः—

{अम्बरीषस्य राज्ञः पुत्रः सिन्धुद्वीप ऋषिः, आपोदेवता, गायत्री छन्दः}

**"ओं शं नो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः" ॥ १ ॥**

( ऋ० १०।९।४ )

**ओम्**=हे जगद्रक्षक जगद्गुरो परमात्मन् ब्रह्म ! **आपः**=इमा आपो **नः**=अस्माकं **पीतये**=पानाय-आचमनाय **भवन्तु**=प्रार्थनायां लोट्, भवेयुः, **अभिष्टये**=पीताः सत्योऽभीष्टाय ब्रह्मप्राप्तये **भवन्तु**=पूर्ववल्लोट्, प्रभवेयुः, एवमग्रेऽपि । **शम्**=तत्प्राप्तिप्रतिबन्धकबाह्याभ्यन्तरनिखिलान्तरायनिवारणेन सुखमय्यो **भवन्तु**=सन्तु, तन्निवारणसामर्थ्यद्योतनाय हेतुगर्भविशेषणम् **देवीः**=यस्मादेताः देव्यो दिव्यशक्तिमत्यः । न केवलमधुनाऽऽचमनवेलायामेव, अपि तु सर्वदा **नः**=अस्माकं **शंयोः**=चतुर्थ्यर्थे षष्ठी विभक्तिः, ऐहिकामुष्मिकसुखाय, तत्प्राप्तिप्रतिबन्धकबाह्याभ्यन्तरनिखिलान्तरायनिवारणाय च**अभिस्रवन्तु**=साम्मुख्ये प्रवहन्त्वित्यर्थः ।

लौकिकं स्याद्वैदिकं वा, यद् यत् कर्मारभ्यते, तत्सर्वं साद्गुणाय नियमेनोमित्येतदुच्चार्य सततमारब्धव्यं वैदिकानामिति स्थितिः । यत्रैतत् स्मृतं भवति **"तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्"** ( गी० १७।२४ ) इति । वैदिकं च सन्ध्याकर्माचमनादारभ्यते । तत्राचमने किल विनियुक्तः **"शन्नो देवीः"** इति मन्त्रः । अतः स ओमा सार्धमुच्चारयितव्यः । अन्यथा वैगुण्यापत्तेः । ओमोच्चार्यमाणश्चोमर्थमुपादायैव स्वीयमर्थमभिधत्ते न तं परित्यज्य कर्हिचित् । यत्कारणं तदानीमों तदङ्गतां भजते न स्वातन्त्र्यम् । अर्थपृथक्त्वं च स्वतन्त्रस्य सतो युज्यते नाङ्गभावं भजमानस्य । मन्त्रे चाङ्गभावं भजमानमप्यों मूर्द्धस्थानं लभते, शरीरस्थानं च मन्त्रः । यत्कारणं भवति तद्ब्रह्मणो मुख्यं नामधेयम् । यत्रैतत्स्मृतं भवति **"ओमिति नामनिर्देशो ब्रह्मणः"** ( सर्वानु० ४ ) इति । **"तस्य वाचकः प्रणवः"** ( योग० १।२७ ) इति च । **वाचकः**=नाम ।

**प्रणवः**=ओम्। ब्रह्मणश्च भवति मूर्द्धस्थानं सुप्रसिद्धं न विवरणं किञ्चिद-पेक्षते। नामिनो मूर्द्धस्थानत्वे च नाम्नो मूर्द्धस्थानं सर्वथा युक्तम्। मन्त्रस्यापो देवता। **"आपो हि, त्रिशिरास्त्वाष्ट्रः सिन्धुद्वीपो वाऽऽम्बरीषः, आपो, गायत्री"** इति सर्वानुक्रमणीवचनात्। आपश्चोमर्थस्य भगवतो ब्रह्मणः सर्वथा वशे वर्त्तन्ते। यत्रैतदाम्नातं भवति **"इन्द्रो अस्माँ अरदद् वज्रबाहुरपाहन् वृत्रं परिधिं नदीनाम्। देवोऽनयत् सविता सुपाणिस्तस्य वयं प्रसवे याम उर्वीः"** (ऋ० ३।३३।६) इति। **"एतस्य वा अक्षरस्य प्रशासने गार्गि! प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्याः"** (बृ० ३।८।९) इति च। वशवर्त्तिनीनां तासामिष्टप्राप्तयेऽनिष्टपरिहाराय चानुकूल्यं निर्विशङ्कं ब्रह्मतन्त्रमिति जगतः पितृचरणं ब्रह्मोमा सम्बोध्येष्टप्राप्तयेऽनिष्टपरिहाराय च तदानुकूल्यप्रार्थनं सङ्गच्छतेतराम्। मन्त्रदेवतात्वात् प्रार्थनीयाः सत्योऽप्यापश्चेतनाविरहान्मा नाम कदाचित् प्रार्थनां श्रौषुः, शृण्वन्त्योऽपि वा मा नाम कदाचिदानुकूल्यं भाक्षुरिति वा तदन्तर्यामिब्रह्मप्रार्थनम्। अन्तर्यम्यानां तासामानुकूल्यं च निश्चितमिति नेदं किञ्चिदयुक्तमाचरितं भवति। ब्रह्मणोऽन्तर्य्यामित्वं चापां बृहदारण्यके साक्षादाम्नायते, **"योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं, योऽपोऽन्तरो यमयत्येष त आत्माऽन्तर्य्याम्यमृतः"** (बृ० ३।७।४) इति। ब्रह्मचोमा सम्बोध्यमानं पितेव पुत्राणां तूर्णमाकर्णयति प्रार्थनाहवमित्यसंशयम्। यत्रैतदाम्नातं भवति **"न घा वसुर्नियमते दानं वाजस्य गोमतः। यत् सीमुपश्रवद् गिरः"** (ऋ० ६।४५।२३) इति। न तदा वासयिता सर्वेषामिन्द्रो नियच्छति परिच्छिनत्ति दानं गोमतो वाजस्यान्नस्य, यदैवोपशृणोति हवान् पुत्राणामिति तदर्थः। **"उतो घा ते पुरुष्या इदासन् येषां पूर्वेषामशृणोर्ऋषीणाम्। अधाऽहं त्वा मघवन्! जोहवीमि त्वं न इन्द्रासि प्रमतिः पितेव"** (ऋ० ७।२९।४) इति च। तेऽपि च नूनं मनुष्या एवासन्, येषां पूर्वेषामृषीणां हवमशृणोः, अधाहं त्वां

जोहवीमि, हे इन्द्र! त्वमस्माकं पितेव प्रमितिरसि कथं न शृणोषि नोहवमित्यर्थः ।

ता एता आपः प्रकृतिस्थाः फेनबुद्बुदविरहिताः संहताङ्गुलिना दक्षिणहस्तेन ब्रह्मतीर्थे निधाय मन्त्रमुच्चार्य त्रिराचमितव्याः । तदाचमनादन्तरतः पूतिरुपजायते । यत्रैतच्छ्रुतं भवति **"तद् यदप उपस्पृशति तेन पूतिरन्तरतः, पवित्रं वा आपः"** ( शत० १।१।१।१ ) इति । **उपस्पर्शः**=आचमनम् । **पवित्रता**=पूतिः । आपः खलु मन्त्रेणाचम्यमाना यथाप्रकृति सत्त्वमभिवर्धयन्ति, रजस्तमसी चाभिभवन्ति । तदभिभवादुपास्यब्रह्मप्राप्तौ व्याधिस्त्यानप्रभृतयो बाह्याभ्यन्तरनिखिलान्तरायास्तदानीमुपरमन्ते, सत्त्वगुणाभिवर्द्धनेन च शमदमादयः साधनविशेषा अभिनिष्पद्यन्ते । बाह्याभ्यन्तरनिखिलान्तरायनिवृत्तिः साधनविशेषाभिनिष्पत्तिश्चात्र तात्कालिकी पूतिरन्तरतः, तत्सम्पत्तौ च ध्रुवा ब्रह्मप्राप्तिः, आपश्च सम्प्रति सुखमप्यस्तत्सम्पादनात् । अत एवोच्यते **"अभिष्टये भवन्तु, शं भवन्तु"** इति । ब्रह्मप्राप्तिप्रतिबन्धकाः सर्वे बाह्याभ्यन्तरान्तरायाश्च योगदर्शने प्रतिपाद्यन्ते **"व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः"** ( यो० १।३० ) इति । तेषां निवृत्तौ शमदमादिसाधनविशेषाभिनिष्पत्तौ चापां सामर्थ्यं देवीरिति विशेषणोपादानेन निश्चाय्यते । यतस्ता दिव्यशक्तिमत्योऽतो न तासामेतत् किञ्चिद्भारावहमिति तदुपादानाशयः । तादृक्षकार्य्यकारिणी दिव्या शक्तिश्च प्रवहन्तीनामपामुपपद्यते न तिष्ठन्तीनामित्यत आह **"शंयोरभिस्रवन्तु नः"** इति । स्रवणमिह प्रवहणम् । प्रवहन्त्योऽपि देशान्तरे चेत् प्रवहन्ति किं नस्तेन भवेदिति मत्वा स्रवतिनाऽभिः सम्प्रयुज्यते । साम्मुख्यार्थोऽभिः । यस्मिन् देशे वयं वसामस्तत्र प्रवहन्त्विति तदभिप्रायः । येऽमी बाह्याभ्यन्तरनिखिलान्तरायास्ते विक्षेपकाः प्रत्यक्षाः । सत्सु तेषु क्षणार्द्धमपि चित्तं स्थैर्यं न लभते, साधनविशेषानिष्पत्त्या च न ब्रह्मोपासनार्हं सम्पद्यते । विक्षिप्तस्य तस्य तदसम्पत्तेरौत्सर्गिकत्वात् । विहिते चाचमनेऽन्तरायनिवृत्त्या साधन-

विशेषाभिनिष्पत्त्या च भवति क्षिप्रं तदुपासनार्हम्। तत्त्वं च स्थिरत्वे सति शान्तत्वम्। ततो वयं निःसंशयं प्रतिपद्यामहे नूनमाचमनस्यैतन्माहात्म्यम्। तदभावेऽभावात्, तद्भावे च भावात्। यस्य तावदाचमनस्यैतादृक्षं माहात्म्यं तत्सन्ध्योपासनकर्मणि वर्तमानेनाधिकारिजनेनावश्यमादौ विधातव्यं न भ्रमतोऽपि विस्मर्तव्यमित्युपदेशः ॥ १ ॥

विहितमाचमनम्। तेनचोपासनार्हं चित्तं सम्पन्नम्। न च तावन्मात्रं पर्य्याप्तम्। सत्यपि तस्मिन् निर्बलेन्द्रियाङ्गानामुपासनानीशत्वात्। नह्युपासनार्हचित्ताः सन्तोऽपि निर्बलेन्द्रियाङ्गाः कथञ्चिद्ब्रह्मोपासितुमीशते। तेषां तदुपासनाय यथाऽन्तःकरणस्य चित्तस्य शान्त्यादिप्रयोजकं स्थैर्य्यमावश्यकं, तथा बाह्येन्द्रियाङ्गानां बलमप्यावश्यकम्। तच्चेन्द्रियस्पर्शायत्तम्। **इन्द्रियस्पर्शः**=इन्द्रियाङ्गोभयस्पर्शः। प्राधान्येन तथा व्यपदेशः। स चाचमनानन्तरं यथाविधि विधातव्यः। तत्रैष मन्त्रो विनियुज्यते—

**"ओं वाक् वाक्, ओं प्राणः प्राणः, ओं चक्षुश्चक्षुः, ओं श्रोत्रं श्रोत्रम्, ओं नाभिः, ओं हृदयम्, ओं कण्ठः, ओं शिरः, ओं बाहुभ्यां यशोबलम्, ओं करतलकरपृष्ठे ॥ २ ॥**

**ओम्**=हे जगद्रक्षक जगद्गुरो परमात्मन् ब्रह्म! **वाक्**=आस्ये शिरसि स्थितं वागिन्द्रियं शरदः शतं प्रब्रवीतु, **वाक्**=वागिन्द्रियसहचरं रसनेन्द्रियं शरदः शतं रसयतु १ **ओम्**=हे जगद्रक्षक जगद्गुरो परमात्मन् ब्रह्म! **प्राणः**=दक्षिणनासास्थोच्छ्वासः शरदः शतमुच्छ्वसितु, **प्राणः**=वामनासास्थनिश्वासः शरदः शतं निश्वसितु, वैपरीत्येन वा दक्षिणनासास्थनिश्वासः, वामनासास्थोच्छ्वासः। केचित्तु **प्राणः प्राणः**=वामदक्षिणनासाग्रवर्ती घ्राणः शरदः शतं जिघ्रतु, निश्वासोच्छ्वासात्मनः प्राणस्यानिन्द्रियत्वादिति व्याचक्षते २ **ओम्**=हे जगद्रक्षक जगद्गुरो परमात्मन् ब्रह्म! **चक्षुः**=दक्षिणनेत्रं, **चक्षुः**=वामनेत्रं शरदः शतं पश्यतु ३ **ओम्**=हे जगद्रक्षक जगद्गुरो परमात्मन् ब्रह्म! **श्रोत्रं**=दक्षिणकर्णं, **श्रोत्रं**=वामकर्णं शरदः शतं शृणोतु ४ **ओम्**=हे जगद्रक्षक जगद्गुरो परमात्मन् ब्रह्म! **नाभिः**=

नाभिस्थो जाठरोऽनलः शरदः शतं पचतु ५ **ओम्**=हे जगद्रक्षक जगद्गुरो परमात्मन् ब्रह्म! **हृदयं**=हृत्पद्मं, हृत्पद्मस्थं मनो वा शरदः शतं परिस्पन्दताम् ६ **ओम्**=हे जगद्रक्षक जगद्गुरो परमात्मन् ब्रह्म! **कण्ठः**=ताल्वादिसहितो गलः शरदः शतं भाषताम् ७ **ओम्**=हे जगद्रक्षक जगद्गुरो परमात्मन् ब्रह्म! **शिरः**=मस्तिष्कं शरदः शतं सञ्चष्टाम् ८ **ओम्**=हे जगद्रक्षक जगद्गुरो परमात्मन् ब्रह्म! **बाहुभ्यां**=प्रथमार्थे पञ्चमी, दक्षिणबाहुर्वामबाहुश्चोभौ भुजौ **यशोबलं**=यशस्करं वीरकर्मसामर्थ्यं शरदः शतं बिभृताम् ९ **ओम्**=हे जगद्रक्षक जगद्गुरो परमात्मन् ब्रह्म! **करतलकरपृष्ठे**=करो हस्तः, दाने हस्ततलं, प्रतिग्रहे च हस्तपृष्ठम्, अथवाऽसिमुष्टौ हस्ततलं, परेषां तत्रासिप्रहारसहने च तन्मुष्टिच्छन्नं हस्तपृष्ठं शरदः शतं बिधेताम् १० इत्यर्थः ।

एष किल यजुर्मन्त्रः पूर्णा कण्डिका विनियोगभेदाद् दशभिरवान्तरमन्त्रैर्विभज्यते, यथा "**इषे त्वोर्जे त्वा**" (यजु० १।१) इत्यादिका पूर्णा कण्डिका पञ्चभिरवान्तरमन्त्रैः । तेषां प्रत्येकस्यावान्तरमन्त्रस्य प्रतीन्द्रियं प्रत्यङ्गं च विनियोगोऽत्र स्पर्शनकर्मण्यवगन्तव्यः । कार्यभेदज्ञापनाय देवतोपस्थापनाय च प्रत्येकस्मिन् तस्मिन् मूर्धन्योंं संसृज्यते । यथा हि पूर्वस्मिन्नाचमनमन्त्रे खलु मन्त्रस्थाप्पदेन देवतोपस्थाप्यते तथेह प्रतिमन्त्रं मूर्धनि संसृष्टेनोमा देवतोपस्थाप्यते । पूर्वत्रावन्तर्य्यामि ब्रह्म देवता, अत्र च सर्वत्र सर्वान्तर्य्यामि ब्रह्म, तत्रैवोमः सम्बन्धावगमादिति विशेषः । प्रत्येकं मन्त्रे तत्तदिन्द्रियाङ्गकर्माभिव्यञ्जकं क्रियापदं, शरदः शतमिति पदद्वयश्चान्तेऽध्याह्रियते "**वाङ् म आसन्, नसोः प्राणः, चक्षुरक्ष्णोः, श्रोत्रं कर्णयोः । अपलिताः केशाः, अशोणा दन्ताः, बहु बाह्वोर्बलम् । १ । ऊर्वोरोजो जङ्घयोर्जवः, पादयोः प्रतिष्ठा, अरिष्टानि मे अङ्गानि, सर्वात्मा निभृष्टः**" (अथर्व०- १९।६०। १।२) "**पश्येम शरदः शतं, जीवेम शरदः शतं, शृणुयाम शरदः शतं, प्रब्रवाम शरदः शतम्, अदीनाः स्याम शरदः शतम्**" (यजु० ३६।२४) इत्यथर्वपरिशिष्टयाजु-

धमन्त्रसंवादात् । क्रियापदे च सर्वत्र प्रार्थनायां लः । प्रथमे मन्त्रे वाक्पदं शक्तिभेदाभिप्रायेण द्विः प्रयुज्यते । तत्रैकं शब्दोच्चारणशक्तिकं वागिन्द्रियं, द्वितीयं च रसग्रहणशक्तिकं रसनेन्द्रियं प्रतिपादयति । वागिन्द्रियस्य शक्तिर्बलं प्रवचनेन, रसनेन्द्रियस्य च रसग्रहणेनाधिगम्यते । प्रवचनं चात्र भगवतो वेदस्य, ग्रहणं च मेध्यस्यायुःसत्वबलारोग्यादि-वर्धकस्य स्वतो वा परतो वा स्निग्धस्य स्थिरस्य रसस्याभिप्रेयते, नातो-विपरीतस्यान्यस्य कस्यचिदिति न विस्मर्तव्यम् । वागिन्द्रियस्य रसने-न्द्रियस्य च स्थानमास्यं, तदेव मन्त्रमुच्चार्य दक्षिणेन करेण स्प्रष्टव्यम् । विश्वरक्षकं जगद्गुरुं परमात्मानं ब्रह्म प्रणवेन सम्बोध्य स्थानस्पर्शने स्थानिनोऽतीन्द्रियस्य तत्तदिन्द्रियस्य सामर्थ्यं प्रवरीवृध्यते यथा कार्य-विशेषे नियोगवेलायां पिशङ्गवाससाऽऽचार्य्येण प्रणवमुच्चार्य स्नेहा-तिशयाद् हस्ताभ्यां पृष्ठतः स्पृष्टस्य व्रतिनोऽन्तरात्मनः सामर्थ्यम् । किमिह चित्रमिव लोकसे—चिन्तनपदातिक्रान्तं हि भगवतो नामधेयस्य माहात्म्यम् । यत्ते चिरेणापि सम्भावनापथं नावतरति तत्प्रत्यक्षमिव निभालयते त्वरितमास्तिको जनः । त्वमपि श्रद्धत्स्व सोम्य । यत्कार-णमैहिकामुष्मिकं सर्वं भद्रं श्रद्धामेवाधिवावस्यते । यत्रैतदाम्नातं भवति **"प्रियं श्रद्धे ! ददतः, प्रियं श्रद्धे ! दिदासतः । प्रियं भोजेषु यज्वस्विदं म उदितं कृधि"** (ऋ० १०।१५१।२) **"श्रद्धां देवा यजमाना वायुगोपा उपासते । श्रद्धां हृदय्ययाऽऽकूत्या श्रद्धया विन्दते वसु"** ( ऋ० १०।१५१।४ ) इति । आस्तिक्य-बुद्धिः श्रद्धा । भगवन्नाममाहात्म्यं शौनःशेपे सूक्ते प्रव्यक्तम् । **"सदा ते नाम स्वयशो विवक्मि"** ( ऋ० ७।२२।५ ) इत्या-दिमन्त्रेषु च ततोऽपि स्फुटतरमित्यलमिह बहु विस्तरेण । बलं=शक्तिः साम-र्थ्यम् । तच्च यावज्जीवं प्रतीन्द्रियं प्रत्यङ्गं च जीवनयात्रोद्वहनाय प्राणि-मात्रस्यावश्यकम् । किं पुनः प्राणिसाराणां मनुष्याणां, तत्रापि च भगव-त्पुत्राणामार्य्याणाम् । नहि येषामिन्द्रियाणि बलं नाधिकुरुते, शरी-राङ्गानि वा बलं नाधिशेते, ते प्राणान् धारयन्तोऽपि जीवनयात्रामुद्वोढुं

पारयन्ते। न च प्राणानां धारणमात्रं जीवनयात्रोद्वहनं कदाचिदभिजाताः पुरुषसिंहा अनुमन्यन्ते। नूनं तद्यथोचितोद्वहनं लोके बलनिबन्धनमिति सुध्रुवम्। अत एवाम्नायते **"बलं धेहि तनूषु नो, बलमिन्द्रानडुत्सु नः। बलं तोकाय तनयाय जीवसे, त्वं हि बलदा असि"** (ऋ० ३।५३।१८) इति। शरीररथवहनसाधर्म्यादनड्वाहोऽत्रेन्द्रियाङ्गानि। यद्बलाभावे खलु मनुष्याणां जीवनयात्रोद्वहनेऽपि संशयः, तदभावे सायंप्रातःसन्ध्याकर्मानुष्ठानस्य का न्वाशा। तदिदं बलं मन्त्रमुच्चार्य्य दक्षिणेन करेणास्याग्रे शिरसि स्पर्शनाद् वागिन्द्रिये रसनेन्द्रिये च यथा वरिवर्द्धि, तथाऽन्यत्राऽपि मन्त्रोच्चारणपूर्वकस्पर्शनात् पाप्यातीति निश्चेतव्यम्। स्पर्शनं च प्रतीन्द्रियं प्रत्यङ्गं च सर्वत्र दक्षिणेन करेण पूर्वं दक्षिणं स्प्रष्टव्यं तदनु वामम्। बाहुस्पर्शने च दक्षिणेन वामो वामेन दक्षिणो बाहुः स्पृश्यते युगपदिति विशेषः। अन्तिममन्त्रेण यावज्जीवमदैन्यं याच्यते। दैन्यं चेह धनधान्याभावप्रयोज्यं विवक्षितं, नेन्द्रियादिवैकल्यप्रयोज्यम्। यावज्जीवं तद्वैकल्यस्य पूर्वत्र प्रार्थनात्। धनधान्याभावे हि मनुष्यो दीनो भवन् विश्वेषामग्रे याचमानो हस्ततलं प्रदर्शयति, स्वयं चाकिञ्चनत्वाद् दातुमशक्तो याचमानान् वर्जयन् हस्तपृष्टम्। तदुभयं मे मा भूत्। अहं हि यावज्जीवं धनं धान्यं प्रयच्छन्नेव सर्वेषां हस्ततलं प्रसारितं पश्यानि, मा नामैवं मे हस्ततलं कोऽपि क्वापि कदाचिद् दर्शत्। प्रतिग्राही स्वप्नेऽपि मा भूवं, दातैव सर्वदा सर्वत्र स्यामिति मन्त्रहृदयम्। व्याख्यानान्तरं च **"त्वं ह त्यद्दणया इन्द्र! धीरोऽसिर्न पर्व वृजिना शृणासि"** (ऋ० १०।५९) इत्यादिमन्त्रान्तरसम्वादात्। अत्रापि नास्ति किञ्चिदसंश्लिष्टम्। असिहस्तानां वीरकर्मणां प्रतिदिनं तादृशप्रार्थनस्यौचित्यात्। आर्य्याश्च निसर्गतो वीरकर्माणोऽसिहस्ताः प्रसिद्धा इति सायंप्रातःसन्ध्याकर्मणि वर्तमानानां तेषां तथा—प्रार्थनं युज्यतेतराम्। वीरकर्मप्रशंसा च श्रूयते भगवति वेदे **"ये युध्यन्ते प्रधनेषु शूरासस्तनूत्यजः। ये वा सहस्रदक्षिणास्तांश्चिदेवापि गच्छतात्"** (ऋ० १०।१५४।३) इति। तथाऽध्येति च

शूद्राल्लिङ्गी भगवान् पराशरोऽपि ताम् "**यं यज्ञसङ्घैस्तपसा च विप्राः स्वर्गैषिणो वाऽत्र यथैव यान्ति । क्षणेन यान्त्येव हि तत्र धीराः प्राणान् सुयुद्धेन परित्यजन्तः**" (पराशरस्मृ० १।३।३६) इति । मणिबन्धस्याग्रेऽवस्थितः साङ्गुलिर्भागो हस्तः । अंस-मणिबन्धयोर्मध्यवर्ती दीर्घो भागो बाहुरिति विवेकः । तत्तदिन्द्रियाङ्ग-कर्मप्रार्थनेन तद्बलप्रार्थनमर्थादापद्यते । बलाभावे कर्मानिष्पत्तेः । तदेवेदं बलमिन्द्रियस्पर्शस्य प्रयोजनम् । तस्मादाचमनानन्तरमवश्यं स तत्तन्मन्त्रमुच्चार्य यथाक्रमं विधातव्यः ॥ २ ॥

बलीनि सम्पन्नानि तावदिन्द्रियाङ्गानि चेदपवित्राणि भवेयुः, तदा प्रमादीनि भवन्ति कर्मसंलग्नमपि चित्तं बलेनापहरेयुः । अपूतानां बलवतां प्रमादेऽवश्यम्भाविनि बलात् परापहरणस्य प्रकृतिसिद्धत्वात् । अत्र सीमा-निवासिनोऽपगानाः प्रत्यक्षमुदाहरणम् । स्मर्यते च भगवद्गीतायां प्रमादि-नामिन्द्रियाणां बलाच्चित्तापहरणम् "**यततो ह्यपि कौन्तेय! पुरु-षस्य विपश्चितः । इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः**" (गी० २।६०) इति । मनः=चित्तम् । तदपहरणेचापूतानां प्रमादिनामिन्द्रियाङ्गानां कर्मवैगुण्यं सुध्रुवम् । न च पूतानां सतां तेषां चित्तापहरणं कर्हिचित् सम्भाव्यते । यत्कारणं पूतानि भवन्ति तानि नियमेन चित्तानुकारं भजन्ते न जातु तदपहारं विदधते । पूतत्वं= पवित्रत्वं शुद्धत्वम् । तदनुदिनं मार्जनादभिनिर्वर्तते । लोके मार्जितानां पूतत्वदर्शनात् । अतः स्पर्शनानन्तरमिन्द्रियाङ्गानां यथाविधि मार्जनं विधातव्यम् । मार्जनस्य स्वरूपमग्रे निरूपयिष्यते । तत्रैष विनियुक्त-मन्त्रपाठः—

"**ओं भूः पुनातु** (शिरसि) १ **ओं भुवः पुनातु** (नेत्रयोः) २ **ओं स्वः पुनातु** (कण्ठे) ३ **ओं महः पुनातु** (हृदये) ४ **ओं जनः पुनातु** (नाभ्याम्) ५ **ओं तपः पुनातु** (पादयोः) ६ **ओं सत्यं पुनातु** (पुनः शिरसि) ७ **ओं खं ब्रह्म पुनातु** (सर्वत्र) ८ ॥ ३ ॥

ओमोऽर्थो ब्रह्म सर्वत्र विशेष्यम् । तत्र विशेषणतया गुणविशेष-समर्पका भूरादयः सर्वे शब्दाः । प्रार्थनायां लोट् । **भूः**=सर्वस्य प्राणो ब्रह्म, **पुनातु**=शोधयतु । कत्याकाङ्क्षां पूरयति **शिरसि**=स्थानिनि स्थान-प्रयोगः, वाचि प्राणे च १ । **भुवः**=सर्वस्य दुःखहरं सुखप्रदं वा ब्रह्म, **पुनातु**=शोधयतु । क? **नेत्रयोः**=अक्ष्णोः २ । **स्वः**=सर्वस्य सुखप्राप्तिस्थानं ब्रह्म, **पुनातु**=शोधयतु । क? **कण्ठे**=ताल्वादिसहिते गले ३ । **महः**=सर्वस्मान्महत् पूज्यं वा ब्रह्म, **पुनातु**=शोधयतु । क? **हृदये**=हृत्पद्मे मनसि वा ४ । **जनः** सर्वस्य जनयितृ ब्रह्म, **पुनातु**=शोधयतु । क? **नाभ्यां**=नाभिस्थे जाठरेऽनले ५ । **तपः**=तपोधर्मकं, दुष्टानां तापकं वा ब्रह्म, **पुनातु**=शोधयतु । कः? **पादयोः**=चरणयोः ६ । **सत्यं**=सत्यचिदानन्दस्वरूपं ब्रह्म, **पुनातु**=शोधयतु । क? **शिरसि**=मस्तिष्के ७ । **खं**=व्यापकं सर्वत्र परिपूर्णं **ब्रह्म**=बृहत्, वेदो वा, तत्प्रतिपाद्यं ब्रह्म, **पुनातु**=शोधयतु । क? **सर्वत्र**=सर्वाङ्गेषु, सर्वेषु प्राणभृत्सु वा ८ इत्यर्थः ।

एषा पावमानी पूर्णा यजुःकण्डिका विनियोगभेदादष्टाभिरवान्तरमन्त्रैर्विभज्यते । तत्र क्रियान्ता मन्त्राः, शिरःप्रभृतयः शब्दाः शुद्धिस्थानप्रदर्शनार्थाः । तत्तन्मन्त्रमुच्चार्य्य क क मार्जनं विधेयं शुद्ध्यर्थिभिरिति दर्शयितुं सप्तम्या तन्निर्देशः । दक्षिणकरेणाङ्गुल्यग्रैस्तत्तन्मन्त्रमुच्चार्य तत्तदङ्गेषु यथाक्रमं जलबिन्दूनां प्रक्षेपो **मार्जनम्** । तत्र विनियुक्ते प्रत्येकं मन्त्रे प्रयुज्यमानमोम्–पूर्ववन्मन्त्रान्तर्गतत्वाद् विशेष्यम् । भूरादिकं च तद्विशेषणम् । रूढ्या भूरादयः शब्दाः पृथिव्यादीन् सप्तलोकानभिदधते । मन्त्रेषु प्रायशो रूढिर्नाद्रियते, अतस्तेषां तत्तद्गुणविशेषप्रतिपादनेन ब्रह्मवाचकस्योमो विशेषणत्वं न दुष्यति । प्रथमे मन्त्रे शिरोग्रहणेन वाचं प्राणं च मञ्चस्थमिव मञ्चग्रहणेन लक्षयति । पूर्वत्र तदुपादानात् । वाक् प्राणश्च प्रधानतः सन्ध्याकर्मण्युपयुज्येते, न चक्षुरादिकमिति विज्ञापयितुं तत्स्थानस्य शिरसो ग्रहणम् । अस्ति च लौकिकवैदिककर्मसु सर्वत्र शिरोऽपि प्राधान्येनोपयुक्तमित्यतिरोहितम् । वाक्प्राणयोश्च मुख्यः प्राणो न वागिति प्राण एवेह शिर इत्यस्य मुख्योऽर्थः । तत्पवित्रतायां

तद्गुणभूताया वाचः पवित्रतायाः स्वयंसिद्धत्वात् । तन्मार्जने विनियुक्तस्तावत् **"ओं भूः पुनातु"** इति मन्त्रः । तत्र भूरित्यस्य प्राणोऽर्थः । भवति-प्राणात्मना वरीवर्ति सर्वत्रेति तद्व्युत्पत्तेः । सत्ताकर्मणो भवतेः कर्तरि क्विपि रूपसिद्धिः । ब्रह्म च सर्वस्य प्राणः प्रसिद्धः । यत्रैतदाम्नातं भवति **"प्राणाय नमो यस्य सर्वमिदं वशे"** (अथर्व० ११।४।१) **"यो मारयति प्राणयति यस्मात्प्राणन्ति भुवनानि विश्वा"** (अथर्व० १३।३।३) **"यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्"** (कठो० ६।२) **"प्राणो ह्येष यः सर्वभूतैर्विभाति"** (मुण्ड० ३।१।३) इति । यत् सर्वस्य प्राणः, तदवश्यमस्माकं प्राणं भविष्यतीति सार्थकं तत्प्रार्थनं, विनियोगे च सादृश्यमपरोक्षम् । **अथवा** भूरित्यस्य सदर्थः । भवतीति तद्व्युत्पत्तेः । अस्ति च ब्रह्म सत् । सत्यस्वरूपत्वात् । प्राणोऽपि च सन्निति विनियोगे सादृश्यम् १ । चक्षुष्मान् हि दुःखादात्मानं सततं रक्षति, सुखं वा शश्वदाप्नोति । यस्य नास्ति चक्षुः, स पदेपदे दुःखपङ्के निमज्जति, सुखं च स्वप्नेऽपि न पश्यति । तस्माद् दुःखहरं सुखप्रदं वा चक्षुः । तन्मार्जने विनियुक्तः **"ओं भुवः पुनातु"** इति मन्त्रः । तत्र भुव इत्यस्य दुःखहरं सुखप्रदं वाऽर्थः । भावयति सम्पादयति दुःखनाशं सुखं वा सर्वस्येति तद्व्युत्पत्तेः । सत्ताकर्मणोऽन्तर्भावितण्यर्थाद् भवतेः कर्तर्य्यसुनि रूपसिद्धिः । गुणाभावश्छान्दसः । उवङादेशः । ब्रह्म च सर्वस्य दुःखहरं सुखप्रदं च सुप्रसिद्धम् । यत्रैतदाम्नातं भवति **"स नः पर्षदति दुर्गाणि विश्वा"** (ऋ० १।९९।१) **"मघवन्! शर्म यच्छ नः"** (ऋ० १।१०२।३) इति । यत् सर्वस्य दुःखहरं सुखप्रदं च ब्रह्म, तदवश्यमस्माकं दुःखहरं सुखप्रदं वा चक्षुः पवित्रयिष्यतीति सार्थकं प्रार्थनं, विनियोगे च सादृश्यं सुव्यक्तम् । **अथवा** भुव इत्यस्य चिदर्थः । भावयति प्रकाशयति चेतयति सर्वमिति तद्व्युत्पत्तेः । अस्ति च ब्रह्म चित् । चैतन्यरूपत्वात् । चैतन्यं प्रकाशः, प्रकाशमयञ्च चक्षुरिति विनियोगे सादृश्यम् २। यस्य हि कण्ठोऽध्ययने प्रवचने व्याख्याने च श्लक्ष्णो मधुरो विशालः, स सर्वत्र

सत्क्रियते, सत्क्रियमाणञ्च सुखमुपभुङ्क्ते । तस्मात् सुखप्राप्तिस्थानं कण्ठः । तन्मार्जने विनियुक्तः **"ओं स्वः पुनातु"** इति मन्त्रः । तत्र स्व इत्यस्य सुखप्राप्तिस्थानमर्थः । सुष्ठु ईयते प्राप्यते सुखमस्मिन्निति तद्व्युत्पत्तेः । सुपूर्वकादेतेरधिकरणे विच् । गुणे यणादेशः । ब्रह्म च सुखप्राप्तिस्थानं सर्वसम्मतम् । यत्रैतच्छ्रुतं भवति **"अधा ते सुम्नमीमहे"** ( ऋ० ८।९५।११ ) **"यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते । कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि"** ( ऋ० ९।११२।११ ) **"यो वै भूमा तत्सुखम्"** ( छां० ७।२३।१ ) इति । प्रार्थनसार्थक्यं विनियोगसादृश्यं च पूर्ववद् योजयितव्यम् । **अथवा** स्व इत्यस्य सुखमर्थः । सुव्रियते इति तद्व्युत्पत्तेः । अस्ति च ब्रह्म सुखम् । आनन्दरूपत्वात् । कण्ठोऽपि सुखहेतुत्वात् सुखमिति विनियोगे सादृश्यम् ३। **हृदय**पुण्डरीकं हि भगवतो ब्रह्मणः स्थानमभ्युपगम्यते **"एष म आत्माऽन्तर्हृदये"** ( छां० ३।१४।३ ) **"यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशः"** ( छां ८।१।१ ) **"हृद्यपेक्षया तु मनुष्याधिकारत्वात्"** ( वेदान्त० १।३।२५ ) **"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति"** ( गी० १८।६१ ) इत्यादिश्रुतिस्मृतिभ्यः । अतएव तन्महत् पूज्यम् । तन्मार्जने विनियुक्तः **"ओं महः पुनातु"** इति मन्त्रः । तत्र मह इत्यस्य महत् पूज्यमर्थः । मह्यते पूज्यत इति तद्व्युत्पत्तेः । पूजाकर्मणो महेः कर्मण्यसुन् । ब्रह्म च सर्वेभ्यो महत् पूज्यम् । यत्रैतदाम्नातं भवति **"अर्चन्तस्त्वा हवामहे"** (ऋ० ५।१३।१) **"स वा एष महानज आत्मा"** (बृहदा० ४।४।२२ ) **"पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्"** ( गी० ११।४३ ) इति । प्रार्थनसार्थक्यं विनियोगसादृश्यं च पूर्ववदूह्यम् ४। **नाभौ** जाठरानले हि पच्यमानादन्नाद् वीर्य्यमुपजायते । वीर्याच्च सर्वभूतोत्पत्तिरिति सर्वभूतोत्पत्तिहेतुर्नाभिः । तन्मार्जने विनियुक्तः **"ओं जनः पुनातु"** इति मन्त्रः । तत्र जन इत्यस्योत्पत्तिहेतुरर्थः । जनयति सर्वमुत्पादयतीति तद्व्युत्पत्तेः । उत्पत्तिकर्मणो जनेः कर्तर्य्यसुन् ।

ब्रह्म च सर्वोत्पत्तिहेतुः सर्वसम्मतम् । यत्रैतच्छ्रुतं भवति **"जनयिता दिवो जनयिता पृथिव्याः"** (ऋ० ५।३६।४) **"यो नः पिता जनिता यो विधाता"** (ऋ० १०।८२।३) **"एष योनिः सर्वस्य"** (माण्डूक्य० ६) **"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद् ब्रह्म"** (तै० ३।१) इति । प्रार्थनसार्थक्यं विनियोगसादृश्यं च पूर्वमिव तर्क्यम् ५ । **तपः** खलु पादयोः धर्मः । यत्कारणमङ्गान्तरापेक्षया तौ बहु तपतः, कर्मकुर्वाणावात्मानं वा बहु तपतः । मनुष्येषु शूद्रः पादौ । **"पद्भ्यां शूद्रो अजायत"** (ऋ० १०।९०।१२) इति मन्त्रवर्णात् । **पद्भ्यां**=प्रथमार्थे पञ्चमी, पादौ । **शूद्रः**=जघन्यो वर्णोऽ**जायत**= अभवद् भवतीत्यर्थः । तस्यापि तपो धर्मः । यत्रैतच्छ्रुतं भवति **"ब्रह्मणे ब्राह्मणं, क्षत्राय राजन्यं, मरुद्भ्यो वैश्यं, तपसे शूद्रम्"** (यजु० ३०।५) इति । आलभ इति क्रियाशेषः । तैत्तिरीये दर्शनात् । आरभे प्रारभे सरीसृज्य इति तदर्थः । **ब्रह्मणे**=वेदाय, **क्षत्राय**=रक्षणाय, **मरुद्भ्यः**=गणशो वाणिज्यायेति मन्त्रपदार्थः । तन्मार्जने विनियुक्तः **"ओं तपः पुनातु"** इति मन्त्रः । तत्र तप इत्यस्य तपोधर्मकं तापकं वा दुष्टानामर्थः । तपतीति तद्व्युत्पत्तेः । तपेः कर्तर्य्यसुन् । ब्रह्म च तपोधर्मकं तापकं च दुष्टानां निर्विवादम् । यत्रैतदाम्नातं भवति **"तपसस्तन्महिना जायतैकम्"** (ऋ० १०।१२९।३) **"त्वं तपः परितप्याजयः स्वः"** (ऋ० १०।१६७।१) **"तपसोऽध्यजायत"** (ऋ० १०।१९०।१) **"विश्वा अग्नेऽपदहारातीर्येभिस्तपोभिरदहो जरूथम्"** (ऋ० ७।१७) **"इन्द्रो यातूनामभवत् पराशरः"** (ऋ० ७।१०४।२१) इति । प्रार्थनसार्थक्यं विनियोगसादृश्यं च पूर्ववत् कल्पयितव्यम् ६ । **मस्तिष्कं** खलु सत्यस्य भूमिः । तत्र हि जाग्रति सत्यं निवसति । सत्यं जीवात्मा, सत्यं तदन्तरात्मा ब्रह्म, सत्यं सत्यभाषणमिति त्रितयसाधारणमेतत् सत्यपदम् । तन्मार्जने विनियुक्तः **"ओं सत्यं पुनातु"** इति मन्त्रः । तत्र सत्यस्य त्रिकालबाधं

त्रिकालाबाधकार्मं वाऽर्थः । अस्तीति सत्, तदेव सत्यमिति तद्व्युत्पत्तेः । अस्तेः शतरि स्वार्थे यत्, भवादिषु वाऽर्थेषु यत् । ब्रह्म च भवति तथा **"ऋतं च सत्यं च"** (ऋ० १०।१९०।१) **"सत्यं ज्ञानमनन्तं ब्रह्म"** (तै० २।१) **"सत्यकामः सत्यसङ्कल्पः"** (छां० ५।१) इत्यादिश्रुतिवचनेभ्यः । प्रार्थनसार्थक्यं विनियोगसादृश्यं च पूर्ववदुत्प्रेक्ष्यम् ७। अवशिष्टेषु सर्वाङ्गेषु विनियुज्यते शुद्ध्यर्थम् **"ओं खं ब्रह्म पुनातु"** इति मन्त्रः । तत्र खंपदमाकाशपर्य्यायं व्याप्तिमर्थमाह । सामान्यात् । ब्रह्मपदं च बृहदर्थम् । यत्रैतदाम्नातं भवति **"यस्मादिन्द्राद् बृहतः किञ्च नेमृते विश्वान्यस्मिन् सम्भृताधि वीर्य्या । जठरे सोमं तन्वी सहो महो हस्ते वज्रं शीर्षणि क्रतुम्"** (ऋ० ।२।१६।२) इति । यद् बृहत् सर्वत्र व्याप्तं च ब्रह्म, तदनन्यचेतसा प्रार्थ्यमानं शिष्टेषु सर्वाङ्गेषु प्राणभृत्सु वा सर्वेषु पवित्रतामाधातुमर्हति । पवित्रत्वात् । नास्ति किञ्चिदनुपपन्नं नाम । तथाच सार्थकं सर्वं प्रार्थनं, विनियोगश्च सर्वोऽनुरूपः ८। तस्मात् सन्ध्याकर्मानुतिष्ठद्भिरङ्गशुद्धिमभीप्सुभिर्नियमेन तत्तन्मन्त्रमुच्चार्य तस्मिन् तस्मिन्नङ्गे यथाक्रमं मार्जनं विधातव्यम् ॥ ३ ॥

बाह्याभ्यन्तराङ्गशुद्ध्या समुदभावि । जीवात्मशुद्धिरवशिष्यते । सन्ध्याकर्मणि बाह्याभ्यन्तराङ्गशुद्धिवज्जीवात्मशुद्धेरप्यावश्यकत्वात् । यथा हि बाह्याभ्यन्तराङ्गशुद्ध्यभावे खलु मनुष्यः सन्ध्याकर्मणि नाधिकारं लभते, तथाऽऽत्मशुद्ध्यभावेऽपि न तदधिकारं भजते । बाह्याभ्यन्तराङ्गशुद्धेरुपायाः किल क्रमेणाचमनं, स्पर्शनं, मार्जनम् । जीवात्मशुद्धेरुपायो विद्या तपश्च । यत्रैतत् स्मृतं भवति **"अद्भिर्गात्राणि शुध्यन्ति, मनः सत्येन शुध्यति । विद्यातपोभ्यां भूतात्मा, बुद्धिर्ज्ञानेन शुध्यति"** (मनु० ५।१०९) इति । **भूतात्मा**=जीवात्मा । स च मनोविशिष्ट एव मन्तव्यो न केवल इति बोधयितुं भूतोपसृष्टात्मपदप्रयोगः । विशिष्टस्य जीवत्वं चोक्तं सांख्यदर्शने **"विशिष्टस्य जीवत्वमन्वयव्यतिरेकात्"** (सांख्य० ६।६३) इति । विद्याशब्देन चात्र ब्रह्मोपासनमुच्यते । तपःशब्देन च तत्साधनं शास्त्रविहितं तपः । तच्च सर्वं प्राणा-

यामेऽन्तर्नीयते । निरतिशयतपस्त्वात् । यावन्ति हि तपांसि शास्त्रेषु शिश्यन्ते, तेभ्यः सर्वेभ्यः प्राणायामोऽतिशय्यते । अत एवाह भगवान् पञ्चशिखाचार्यः **"तपो न परं प्राणायामात्, ततो विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्य"** इति । मनुरपि **"एकाक्षरं परं ब्रह्म, प्राणायामः परं तपः । सावित्र्यास्तु परं नास्ति, मौनात् सत्यं विशिष्यते"** (मनु० २।८३) इति । **प्राणायामः**=प्राणवृत्तिनिरोधः । प्राणस्यायामः संयमो निरोध इति तद्व्युत्पत्तेः । वृत्तिर्व्यापारः । स च श्वासप्रश्वासभेदाद् द्विविधः । उच्छ्वासः **श्वासः**, निश्वासः **प्रश्वासः** । तस्य द्विविधस्य व्यापारस्य निरोधः प्राणायाम इति निष्कर्षः । यत्रैतत् स्मृतं भवति **"तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः"** (यो० २।४९) इति । **"अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे । प्राणापानगती रुद्ध्वा प्राणायामपरायणाः"** (गी० ४।२९) इति च । **प्राणः**=श्वासः । **अपानः**=प्रश्वासः । सोऽयं प्राणायामस्त्रिविधः रेचकः पूरकः कुम्भकश्चेति । शरीरान्तर्गतस्य वायोर्बहिः श्वासेन निःसारणे **रेचकः** । बहिःस्थस्य वायोरन्तः प्रश्वासेन प्रवेशने **पूरकः** । श्वासप्रश्वासनिरोधेन निश्चलतयाऽवस्थाने **कुम्भकः** । स च द्विविधोऽन्तःकुम्भको बहिःकुम्भकश्चेति । पूरकानन्तरं क्रियमाणः श्वासप्रश्वासनिरोधोऽन्तः**कुम्भकः** । रेचकानन्तरं क्रियमाणस्तन्निरोधो **बहिःकुम्भकः** । अस्माद् रेचकपूरककुम्भकभेदेनोक्तात् प्राणायामत्रयादन्योऽप्यस्ति **केवलकुम्भकश्चतुर्थः** प्राणायामः । तत्र रेचकपूरकापेक्षस्तृतीयः **कुम्भकः**, तदनपेक्षस्तृतीयकुम्भकाभ्यासपाटवजन्मा चतुर्थः **केवलकुम्भक** इति विशेषः । सन्ध्याकर्मणि च रेचककुम्भकः पूरककुम्भकश्च प्राणायाम उपयुज्यते नान्यः कश्चन । दक्षिणनासापुटेन रेचनं, वामनासापुटेन च पूरणम् । वैपरीत्येनेत्येके । द्वाभ्यामेव द्वयमित्यन्ये । कुम्भकद्वये जप इति सर्वेषां नियमः । यत्रेदमुक्तं भवति **"दक्षिणे रेचकं कुर्य्याद् वामेनापूर्य्य चोदरम् । कुम्भकेन जपं कुर्यात् प्राणायामः स**

उच्यते" इति । सोऽयमन्तर्बहिःकुम्भके त्रिवारं क्रियमाणो जप एकः प्राणायामः सम्पद्यते । यावन्तस्ते क्रियेरन्, तावतः कुर्वीत, न्यूनान्न्यूनं त्रयं त्ववश्यं विदधीत स्वस्थश्चेत् । इतरथा त्वेकमित्यपवादः । जपे च तात्कालिकेऽस्ति किञ्चिन्मतभेदः । "ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवःसुवरोम्" इति शिरोमन्त्रसहितस्य प्रणवसमायुक्तसप्तव्याहृतिपूर्वकस्य गायत्रीमन्त्रस्य जप इति बह्वृचास्तैत्तिरीयाश्चाचक्षते । "गायत्रीं शिरसा सार्धं जपेद् व्याहृतिपूर्विकाम् । प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः" (याज्ञ० स्मृ० १।२३) इति याज्ञवल्क्यस्मृतिवचनम् "सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते" (बृह० मनु० ५५।९) इति वृद्धमनुवचोऽमृतनादोपनिषद्वचनं च, "भूर्भुवःस्वर्महर्जनस्तपः सत्यं तथैव च । प्रत्योङ्कारसमायुक्तस्तथा तत्सवितुः परम् ॥ ओमापो ज्योतिरित्येतच्छिरः पश्चात् प्रयोजयेत् । त्रिरावर्तनयोगात्तु प्राणायामः प्रकीर्तितः" इति योगियाज्ञवल्क्यवचनं च तत्र प्रमाणं पुरस्कुर्वते । दृश्यते च नारायणोपनिषदाख्ये तैत्तिरीयारण्यकपरिशिष्टे तथाभूतमन्त्रपाठः "ओं भूः, ओं भुवः, ओं स्वः, ओं महः, ओं जनः, ओं तपः, ओं सत्यम्, ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ओमापो ज्योतीरसोऽमृतं ब्रह्मभूर्भुवः सुवरोम्" (तै० आ० १०।३५) इति । शङ्करभगवत्पूज्यपादानां चैतदेव मतम् । तथा चोलेखुः सुव्यक्तं गायत्रीमन्त्रे भाष्ये "सर्वशक्तेः सर्वावभासकतेजोमयस्य परमात्मनः सर्वात्मकत्वद्योतनार्थं सर्वात्मकत्वप्रतिपादकगायत्रीमन्त्रस्योपासनप्रकारः प्रकाश्यते—तत्र गायत्रीं प्रणवादिसप्तव्याहृत्युपेतां शिरःसमेतां सर्ववेदसारमिति वदन्ति । एवं विशिष्टा गायत्री प्राणायामैरुपास्या, सप्रणवव्याहृतित्रयोपेता प्रणवान्ता गायत्री जपादिभिः" इति । वैदिकास्तु मनुष्याणामिदानींतनानां

तावति लम्बायमाने मन्त्रे जपशक्तिमपश्यन्तः प्रणवसहितसप्तव्याहृतिजपमेव तत्र बहु मन्वते । "**प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत् कृताः । व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तपः**" (मनु० ६।७०) इति भगवन्मनुवचनं चात्मशरणं विदधते । प्रबलं हि सर्वेभ्यो याज्ञवल्क्यप्रभृतिवचनेभ्यो नूनं मानवं वचः । यत्रैतच्छ्रुतं भवति "**मनुर्वै यत्किञ्चावदत् तद्भेषजं भेषजतायै**" (ताण्ड्यब्रा० २३।१६।७) इति । तस्मादिह वैदिकं मतमेव श्रेयो न बाह्यचादिकमिति साधु निभालयामहे । वैदिकानामस्माकं प्राणायामे जपे विनियुक्तस्य मन्त्रस्य चैष पाठः—

**"ओं भूः, ओं भुवः, ओं स्वः, ओं महः, ओं जनः, ओं तपः, ओं सत्यम्" ॥ ४ ॥**

**ओम्**=ब्रह्म **भूः**=सर्वस्य प्राणः, **ओम्**=ब्रह्म **भुवः**=सर्वस्य दुःखहरं सुखप्रदं वा, **ओम्**=ब्रह्म **स्वः**=सर्वस्य सुखप्राप्तिस्थानम्, **ओम्**=ब्रह्म **महः**=सर्वेभ्यो महत् पूज्यम्, **ओम्**=ब्रह्म **जनः**=सर्वस्य जनयितृ, **ओम्**=ब्रह्म **तपः**=तपोधर्मकं, दुष्टानां तापकं वा, **ओम्**=ब्रह्म **सत्यं** सत्यचिदानन्दस्वरूपमित्यर्थः ।

एक एवैष पूर्णः कण्डिकामयो यजुर्मन्त्रः सन्ध्याकर्मणि प्राणायामे जपे विनियुज्यते । तत्र वर्तमानेनाधिकारिजनेनार्थज्ञानपूर्वकमेष शनैः शनैर्जपितव्यो न त्वरितेन । वैगुण्यापत्तेरित्यादेशः ॥ ४ ॥

आत्मशुद्ध्या बाह्याभ्यन्तराङ्गशुद्ध्या च सम्पन्नत्वात्सन्ध्याकर्मण्यधिकारः । सन्ध्याकर्म च ब्रह्मोपासनकर्मेत्युक्तम् । सम्प्रति तेन प्रवर्तितव्यम् । तत्प्रवृत्तौ चैष क्रमः—पूर्वं स्तोतव्यं, तदनु प्रार्थयितव्यं, तदनु चोपासितव्यम् । स्तुतस्य प्रार्थितस्य चोपास्यस्योपासने द्रागित्येव तत्प्रसादेनाभीष्टार्थसिद्धेः । अतः पुरस्तादुपास्यं ब्रह्म स्तोतव्यमिति युक्तमवलोकामहे । तत्रैष तावत् प्रतिपदनुचरो नामोपास्यब्रह्मस्तुतिमन्त्रः—

{ ऋषिर्माधुच्छन्दसोऽघमर्षणः, देवता भाववृत्तम्, छन्दोऽनुष्टुप् }

**"ऋतं च सत्यं चाभीद्धात् तपसोऽध्यजायत । ततो**

रात्र्यजायत ततः समुद्रो अर्णवः । समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद् विश्वस्य मिषतो वशी । सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः" ॥ ७ ॥

(ऋ० १०।१९०।१-२-३)

ऋतं=कर्मफलम् "ऋतं पिबन्तौ सुकृतस्य लोके" (कठो० ३।१) इति श्रुतेः, अत्र तद्ग्रहणेन तत्प्रयोजको हेतुर्गृह्यते, हेतौ हेतुमत्प्रयोगात्, कर्मफलप्रदात्रिति तन्निष्कर्षः, अनेन भोक्तृभोग्यशक्तिद्वयमर्थतोऽभिहितं भवति, सत्यं=त्रिकालाबाधम्, ऋतसत्ययोरभेदश्चकारेणैकेनोच्यते, ऋतशब्दार्थार्पितभोक्तृभोग्यशक्तिद्वयाविभागो द्वितीयेन, ऋतं च सत्यं च ब्रह्म सृष्टेः प्रागासीदिति शेषः । तपसः=तस्य भगवतो ब्रह्मणः सङ्कल्पगर्भात् पर्य्यालोचनात्मकाज्ज्ञानापरपर्य्यायादीक्षणात् तपसः "यस्य ज्ञानमयं तपः" (मुण्डको० १।१।९) इति श्रुतेः, अभीद्धात्=कर्तरि क्तः, गर्भेण गर्भिण्या इवाभितः सर्वत इद्धाद् उपचीयमानात् "तपसा चीयते ब्रह्म" (मुण्डको० १।१।८) इति श्रुतेः, ब्रह्म=प्रकृतिः, मूलकारणात् प्रकृतेरध्यजायत=सर्वेषां पृथिव्यन्ततत्त्वानामधीश्वरं सत्ताख्यमाद्यं कार्य्यं महत्तत्वमुदपद्यत । ततः=तस्मान्महत्त्वाद् रात्री=रजस्तमोबहुलत्वाद् रात्रीकल्पोऽहङ्कारोऽजायत । ततः=तस्मादहङ्कारात् समुद्रः=स्थानिनि स्थानप्रयोगः, समुद्रेऽन्तरिक्षे "अम्बरं वियद् व्योम-सगरः समुद्रोऽध्वरमिति षोडशान्तरिक्षनामानि" (निघ० १।३) इति निघण्टोः "एकः सुपर्णः स समुद्रमाविवेश" (ऋ० १०।११४।४) इति चान्यत्र प्रयोगोपलब्धेः, दोधूयमानः सूक्ष्मभूतग्रामः, अर्णवः=स्थूलभूतगर्भः, अर्णांसि स्थूलभूतानि विद्यन्तेऽस्मिन्निति तद्व्युत्पत्तेः । "अर्णसो लोपश्च" (वार्ति० ५।२) इत्यस्त्यर्थे वः, लोपश्च सस्येति रूपसिद्धिः । समुद्रादर्णवादधि=उपरिष्टात् संवत्सरः=स्थूलभूतवर्गः, संवत्सरान्ते जायमानत्वात्, संवसन्ति प्राणिनोऽस्मिन्निति वा तद्व्युत्पत्तेः,

**अजायत**=प्रादुरभवत् । **मिषतः**=तदिदमुपलक्षणं, मिषतोऽमिषतो **विश्वस्य**=सर्वस्य जगतो **वशी**=स्वामी **धाता**=विधाता परब्रह्म-परमेश्वरोऽ**होरात्राणि**=रात्रिदिवसानि **विदधत्**=विधास्यमानो **यथा-पूर्वं**=पूर्वकल्पवत् **सूर्याचन्द्रमसौ**=सूर्यं च चन्द्रमसं चा**कल्पयत**= उदपादयत् । **दिवं**=द्युलोकं, **पृथिवीं**=पृथिवीलोकम्, **अन्तरिक्षं**= मध्यमं लोकम्, **अथो**=अथ **स्वः**=अन्तरिक्षविशेषणम्, ग्रहनक्षत्रा-दिकं वा सर्वमकल्पयदित्यर्थः ।

बह्वृचाणां तृचस्य प्रतिपदनुचर इति पारिभाषिकं नामधेयम्, त्र्यृचस्य प्रगाथवत् । अस्य प्रतिपदनुचरस्य **ऋषिर्माधुच्छन्दसोऽघमर्षणः** । अत एवैतदघमर्षणं सूक्तमिति सर्वत्र व्यपदिश्यते । **देवता भाववृत्तम्** । **छन्दोऽ-नुष्टुप्** । यत्रेदमनुक्रान्तम् **"ऋतं तृचमघमर्षणो माधुच्छन्दसो भाववृत्तमनुष्टुप्"** इति । देवता मन्त्रप्रतिपाद्योऽर्थः । **"या तेनो-च्यते सा देवता"** इत्यनुक्रमणीवचनात् । **भाववृत्तं**=जगज्जनयितृ ब्रह्म, भावान् पदार्थान् वर्तयति निर्वर्तयति जनयति, कर्तरि क्तः, भावानां पदार्थानां वृत्तं वर्तनं निर्वर्तनं जन्म वा यस्माद्, भावे क्तः, इति तद्व्युत्पत्तेः **भावः** सत्ता, तदात्मकस्य भगवतो ब्रह्मणो **वृत्तं** जगज्जननलक्षणं चरित्रमिति वा भाववृत्तम् । सोऽयं परमार्थः । लोके खलु त्रिविधो विभागोऽनुमन्यते सजातीयविभागो विजातीयविभागः स्वगतविभागश्चेति । तत्र जीवात्म-विभागः सजातीयविभागः । चेतनत्वेन ब्रह्मसजातीयत्वात् । सविकारा-याः प्रकृतेर्विभागो विजातीयविभागः । जडत्वेन ब्रह्मविजातीयत्वात् **"पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि"** (ऋ० १०।९०।३) इति समाम्नातः स्वस्य पादैर्विभागः स्वगतविभागः । सर्वोऽ-प्येष सृष्टेः पूर्वं नासीत् केवलमेकमद्वितीयं सद् ब्रह्म विभागत्रयविरहित-मासीदिति सत्यपदेन प्रतिपाद्यते । विभागविरहोऽविभागः । स च भेद-गर्भोऽभेदावभासो न तु तत्त्वतोऽभेदः, तत्त्वतो वा नाश इति भोक्तृभोग्य-शक्तिद्वयमर्थापयता ऋतशब्देनावबोध्यते । कर्मफलवचनोऽयमृतशब्दोऽत्र कर्मफलप्रदातरि प्रयुज्यते । अन्यथा तस्य सत्यशब्देन सामानाधिकरण्या-

नुपपत्तेः । कर्मफलप्रदातृत्वं च भोक्तृभोग्यशक्तिद्वयस्य सद्भावे घटते न तत्त्वतोऽभेदे, तत्त्वतो वा नाशे । नहि यस्य तत्त्वतोऽभेदः समजनि नाशेन वा प्रादुरभावि, तस्य कर्मफलादानं तस्मै वा कर्मफलप्रदानं कथञ्चिदुपपद्यते । अतो न शक्तिद्वयाविभागोऽत्र तत्त्वतोऽभेदो नाशो वा, किन्तु भेदगर्भोऽभेदावभास इति तदन्तराकूतम् । द्विविधा हि पदार्था भवन्ति चेतना अचेतनाश्च । तत्र चेतना भोक्तृशक्त्यात्मनाऽचेतनाश्च भोग्यशक्त्यात्मना तदानीं सत्यशब्दवाच्ये भगवति परब्रह्मणि परमेश्वरेऽविभागेनावतिष्ठन्ते न तु यथावस्थितात्मनेति प्रथमचकारेणोच्यते । न केवलं कर्मफलप्रदातृ ब्रह्म तदाऽऽसीत्, किन्तु यस्मै देयं यच्च देयं तदुभयशक्तिसमुच्चितमिति तदभिप्रायः । यद्धि सत्यशब्देनाभिधीयते तदेव ऋतशब्देन प्रतिपाद्यते नास्ति तयोरणुमात्रोऽपि भेद इति द्वितीयचकारस्यार्थः । तथा च "ऋतं च सत्यं च" इत्यस्य भोक्तृभोग्यशक्तिद्वयगर्भं कर्मफलप्रदातृ सत्यस्वरूपं ब्रह्म सृष्टेः प्रागासीदित्यर्थः सम्पन्नः । कर्मफलप्रदातृ इति ऋतशब्दस्यार्थः । तेन सर्वशक्ति ब्रह्म किमर्थं जगदिदं विरचयतीति प्रश्नः सुसमाहितो भवति । कर्मफलप्रदानार्थमिति सुसमाधानम् । कर्मफलप्रदाने च केवलं भूतानुग्रहः प्रयोजनं नात्मानुग्रहः । यत्रेदमाहुर्योगसूत्रभाष्यकाराः **"तस्यात्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनम्"** (यो० १।२५) इति । सृष्टेः प्राक्कालः प्रलयः । तत्र भोक्तृभोग्यशक्तिद्वयगर्भं ब्रह्माvृतदिति मन्त्रान्तरेऽपि स्फुटं प्रकाश्यते **"न मृत्युरासीदमृतं न तर्हि, न राज्या अन्ह आसीत् प्रकेतः । आनीदवातं स्वधया तदेकं, तस्माद् हान्यन्न परः किञ्चनास"** (ऋ० १०।१२९।२) इति । चेतनाचेतनात्मनो विश्वस्य जगतोऽन्तर्धारणात् स्वधा प्रकृतिः । ततः सहार्थेऽप्रधाने तृतीयाविभक्तिः । अनेन ब्रह्मान्तर्गतत्वं तस्यास्तदानीं सुव्यक्तम् । अप्रधानस्य प्रधानान्तर्गतत्वौचित्यात् । तदिदं ब्रह्मैक्षत बहु स्यामिति । तस्येक्षणात् तपसोऽन्तर्लीना भोक्तृभोग्यशक्तिप्रकृतिर्गर्भाद् गर्भिणीव किञ्चिद् विकारमनुभवन्ती विद्युदिव तेजसा समिद्धा मेघस्य ब्रह्मणो गर्भाद् विभक्तेव प्रादुरासीत् । सेय-

मस्याः प्रथमा विकारावस्था। या किल मन्त्रवर्णे मन इति नाम्ना समाम्नायते **"कामस्तदग्रे समवर्त्तताधि मनसो रेतः प्रथमं यदासीत्"** (ऋ० १०।१२९।४) इति। सांख्या औपनिषदाश्चैनां महत्तत्वनाम्ना समाचक्षते, मान्त्रवर्णिकीं मन इति समाख्यां चानुमन्वते। यत्रैतदुदाहृतं भवति **"महदाख्यमाद्यं कार्य्यं तन्मनः"** (सां० १।७१) इति। सत्त्वरजस्तमसां प्रकाशक्रियास्तम्भनशक्तीनां या काचित् साम्यावस्था, यस्यामेतास्तिस्रः शक्तयः समानशक्तितामापद्यन्ते सा परमसूक्ष्मा प्रमाणकुशलैरपि स्फुटमधिगन्तुमशक्या योगिभिश्च दुर्लक्ष्या महाशक्तिः प्रकृतिरित्याख्यायते। जगन्माता माया लक्ष्मीरव्याकृतमव्यक्तमिति च भगवत्यास्तस्या आख्यान्तराणि। जगत्पितुर्भगवतो ब्रह्मणः सृष्टिसङ्कल्पान्तर्हितेनेक्षणेन तपसा विषमावस्थामनुभवन्त्यास्तस्याः पृथिवीपर्य्यन्तानां सर्वतत्त्वानां बीजभूतं सत्तामात्रं यदाद्यं कार्य्यमुत्पद्यते तदस्माभिर्मन इति समाख्यायते। महत्-तत्त्वं=बृहत्तत्वम्। तस्यैव च मान्त्रवर्णिकं मन इति समाख्यानमिति सांख्यसूत्रहृदयम्। तस्मादेतस्मान्महत्तत्वात् किञ्चिद्रूपान्तरं भजमानाद् यत् तत्त्वान्तरमुपजायते सोऽहङ्कार इति परिभाष्यते **"सोऽहमस्मीत्यग्रे व्याहरत्, ततोऽहंनामाऽभवत्"** (बृहदा० १।४।१) इत्येवमादिश्रुतिदर्शनात्। महत्तत्त्वं सत्त्वबहुलम्, रजस्तमोबहुलोऽहङ्कारः। अत एवैषोऽत्र रात्रिशब्देनोपचर्य्यते। गुणसामान्यात्। रात्रिरपि भवति रजस्तमोबहुलेति न तिरोहितम्। तौ चेमौ महदहङ्कारौ वैशेषिकैर्गौतमैर्मीमांसकैश्च ब्रह्मणस्तपसः क्षुब्धायाः प्रकृतेः भागविशेषौ स्वीक्रियेते। सांख्यैर्योगैर्वेदान्तिकैश्च यथातन्त्रं परिणामविशेषौ। प्रक्रियाभेदस्य दर्शनेषु सर्वत्राभ्युपगमान्नायं कश्चिद्दोषः। तस्मादहङ्कारात् सूक्ष्मभूतसंज्ञकानि पञ्च तन्मात्राणि जायन्ते। तत्र व्यापकं शब्दतन्मात्रम्, अणुपरिमाणानि चान्यानि चत्वारि। तान्येव वैशेषिकादिभिर्द्व्यणुकानि परिभाष्यन्ते। मन्त्रे चेमानि समुद्रनाम्ना प्रतिपाद्यन्ते। स्थानीनि स्थानोपचारात्। समुद्रवन्ति ह्येभ्यः स्थूलभूतानीति वा योगात्। एभ्यः पञ्चतन्मात्रेभ्यः 'शब्दतन्मात्रादाकाशं, तत्राविभागेनावस्थितात् स्पर्शतन्मात्राद्

वायुः, तत्राविभागेनावस्थिताद्रूपतन्मात्रात् तेजः, तत्राविभागेनावस्थिताद्रसतन्मात्रादापः, तत्राविभागेनावस्थिताद् गन्धतन्मात्रात् पृथिवी' इति क्रमेणाकाशवायुतेजःप्रभृतीनि पञ्चस्थूलभूतानि संवत्सरान्ते प्रादुर्भूयन्ते । अतएव मन्त्रे तानि संवत्सरशब्देनाभिधीयन्ते । भूतेभ्यः पृथिव्यादयस्त्रयो लोका महानक्षत्रादिकं च सर्वं जगद् यथानियममुत्पद्यते । सोऽयं मन्त्रप्रतिपाद्योऽर्थः । तदेतन्महदादिपृथिव्यन्तसकलपदार्थोत्पत्तिकारणं ब्रह्म । तस्यैव कृत्यमेतन्महत् कर्म । तदतिरिक्तेणान्येन केनचित्कर्तुमशक्यत्वात् । नहि नानाकर्तृभोक्तृसंयुक्तं प्रतिनियतदेशकालनिमित्तक्रियाफलाधिकरणं मनसाऽप्यचिन्त्यरचनारूपं लोकत्रयात्मकं विश्वमिदं जगदन्तरेण सर्वज्ञं सर्वशक्ति ब्रह्म केनचिदन्येन सहस्रैरपि पुरुषायुषैः कथञ्चिद्विधातुं शक्यते । स्तवनं च यान्यपि सर्वत्र तेनैव कर्मणा प्रवर्तते यत्किलान्येन केनचित् कर्तुं न पार्यते । अतो यावदपि ब्रह्मस्तवनं स्यात् सर्वं तत् स्तवनमिदं न कर्हिचिदतिशयितुमर्हति । स्तुत्यतिशयस्याप्येतेनैव सद्भावात् । यथा हि खलु कस्यचित् पुरुषस्य कृत्यासाधारणेन तदाचरणेन विधीयमाना स्तुतिः सर्वेभ्यः स्तुत्यन्तरेभ्यो विशिष्यते तथा जगतः पितृचरणस्य भगवतो ब्रह्मणो विश्वजगदुत्पत्तिकर्मणा विधीयमाना स्तुतिरपि स्तुत्यन्तरेभ्यो विश्वेभ्योऽतिरिच्यते । भगवतस्तस्य स्तुत्या च मनुष्याणां दुरितनिवृत्तिरवश्यम्भाविनी, नास्ति कस्याप्यत्र किञ्चिद्विमत्यम् । अतएव तृचमेतत्सूक्तं यथाऽघमर्षणेनर्षिणा दृष्टत्वादघमर्षणमिति समाख्यायते तथा भगवत्स्तुत्यतिशयभाक्त्वेन परमार्थतोऽघमर्षकत्वादप्यघमर्षणमिति व्याख्यायते । अघमर्षणसूक्तस्यास्य सर्वाघाभिमर्षकत्वं च विस्पष्टं सस्मरे भगवता मनुना **"यथाऽश्वमेधः क्रतुराट् सर्वपापापनोदनः । तथाऽघमर्षणं सूक्तं सर्वपापापनोदनम्"** (मनु० ११।२६०) इति । यस्य खलु सर्वपापापनोदनसामर्थ्यं, तस्यास्त्युपास्यब्रह्मावर्जनसामर्थ्यमिति तु किमु वक्तव्यम् । अतो नियमतोऽनेन तृचेन प्रतिपदानुचरमन्त्रेण पूर्वमुपास्यं ब्रह्म स्तोतव्यम् ॥५॥

उपास्यब्रह्मस्तवनं प्रावर्तिष्ट । सम्प्रति प्रार्थनं प्रवर्तिष्यते । तत्पूर्वं मनसा परिक्रम्य सर्वतो द्रष्टव्यं किं मे नास्ति यदर्थं मया प्रार्थितव्यम् ।

नहि स्वमदृष्ट्वा प्रार्थनं युक्तम्। मा नामान्यथा प्राप्तार्थमेव प्रार्थनं प्रवृतत्। तस्मात् प्रथमं स्वस्य मनसा परिक्रमणमावश्यकम्। **मनसा परिक्रमणं** च स्वस्याग्रतो दक्षिणतः पृष्ठतो वामतोऽधस्तादुपरिष्टादात्मना परिभ्रमणम्। ब्रह्मोपासनकर्मणि चास्मिन् सन्ध्याकर्मणि सर्वाभ्यो दिग्भ्यः पूर्वा दिक् प्रशस्यते, यत्र किल भगवान् सूर्यः प्रतिदिनमुदयमासादयति। **"प्राची हि देवानां दिक्"** (शतप० ३।१।१।२) इति श्रुतेः। सैव चास्योपासकस्य सन्ध्याकर्मानुतिष्ठतोऽग्रतो दिक्। तत्परिक्रमणे विनियुक्तस्य मन्त्रस्यैवं पाठः—

**"प्राची दिगग्निरधिपतिरसितो रक्षितादित्या इषवः। तेभ्यो नमोऽधिपतिभ्यो, नमो रक्षितृभ्यो, नम इषुभ्यो, नम एभ्यो अस्तु। योऽस्मान् द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मः"** ॥ ६ ॥ (अथर्व० ३।२७।१)

**प्राची**=पूर्वा, **दिक्**=दिशा, **अग्निः**=अग्रणीर्जगद्गुरुरीश्वरः, **अधिपतिः**=स्वामी, **असितः**=सर्वस्माच्छुभ्रो ज्ञानप्रकाशः, **रक्षिता**=रक्षकः, **आदित्याः**=अपत्ये ण्यः, जगत्पितुरादित्यस्येश्वरस्य पुत्रा विद्वांसः, **इषवः**=बाणाः, **नमः**=नमस्कारः, **एभ्यः**=बहुवचनमादरार्थम्, पूर्वदिगधिष्ठितेभ्योऽ**धिपतिभ्यः**=स्वामिभ्यः, **नमः**=नमस्कारः, **रक्षितृभ्यः**=रक्षकेभ्यः, **नमः**=नमस्कारः, **इषुभ्यः**=बाणेभ्यः, **नमः**=नमस्कारः, **एभ्यः**=एतेभ्यः सर्वेभ्यो**ऽस्तु**=लोडधीष्टे, भवतु। **यः**=दुष्टप्रकृतिर्यः, **अस्मान्**=ऋजुप्रकृतीनस्मान्, **द्वेष्टि**=बाधते, **यं**=दुष्टप्रकृतिं यं, **वयम्**=ऋजुप्रकृतयो वयं, **द्विष्मः**=बाधामहे, **तं**=दुष्टप्रकृतिं तं, **वः**=युष्माकमधिपतीनां, **जम्भे**=खादनहेतुरास्यान्तर्गतो दन्तविशेषो जम्भः, तत्र **दध्मः**=प्रक्षिपाम इत्यर्थः।

यस्यां दिशि खलु सूर्यः प्रागञ्चति प्रथमं प्राप्नोति पूर्वमुदेति, सा प्राची दिगिति व्यपदिश्यते। यत्रैतदुदाहृतं भवति **"आदित्यसंयोगाद् भूतपूर्वाद् भविष्यतो भूताच्च प्राची"** (वैशेषि० २।२।१४) इति। सैव पूर्वा दिक्। सन्ध्याकर्मण्युपविष्टस्य च सैवाग्रतो

दिक् । अग्रे चाभ्युदयाय निःश्रेयसाय च संसारमार्गगन्तृणामग्रणीराव-श्यकः । यः किल सुगमं मार्गं दर्शयेत्, अरिष्टेभ्यः पापेभ्यश्च महतीं रक्षां विदध्यात् । न च जगद्गुरुमीश्वरं विहाय कश्चिदन्योऽभ्युदयाय निः-श्रेयसाय च सुपथं दर्शयितुमीष्टे, पापेभ्योऽरिष्टेभ्यश्च महतीं रक्षां विधातुं क्षमते । अल्पज्ञत्वेनाल्पशक्तित्वेन चायोग्यत्वात् । जगद्गुरुरीश्वरस्तु तद्योग्यः । यत्कारणमस्ति स सर्वज्ञः, अस्ति च सर्वशक्तिः । यत्रैतदा-म्नातं भवति **"यो विश्वाऽभिविपश्यति भुवना सं च पश्यति"** (ऋ० ३।६२।९) **"विश्वान्यस्मिन् सम्भृताऽधि वीर्या"** (ऋ० २।१६।२) इति । श्रूयते चात एव भगवतस्तस्मादभ्युदयाय निःश्रेयसाय च सुपथप्रदर्शनस्य पापानामरिष्टानां च निवर्तनस्य प्रार्थ-नम् । **"अग्ने! नय सुपथा राये अस्मान् विश्वानि देव! वयु-नानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम-उक्तिं विधेम"** (यजु० ४०।१८) इति । स एव सर्वासां दिशाम-धिपतिर्भवन्नप्यग्रणीत्वगुणेन प्राच्या दिशोऽधिपतिर्निर्दिश्यते **"प्राची दिगग्निरधिपतिः"** इति । यत्कारणं तत्र तद्गुणोऽधिपतिरपेक्ष्यते । अग्निरित्यस्य चाग्रणीरर्थः सर्वसम्मतः । यत्रैतदुदाहृतं भवति **"अग्निः कस्मात्! अग्रणीर्भवति"** (निरुक्त० ७।१४) इति । लौकिकः खलु सर्वोऽग्रणीरग्निना प्रकाशेन सुगमं मार्गं दर्शयन् पृष्ठगामिनीनां सर्वासां प्रजानामितस्ततो बाणप्रक्षेपेण पापेभ्योऽरिष्टेभ्यो रक्षां विदधाति, बाण इति शस्त्रास्त्रमात्रोपलक्षणम्, जगद्गुरुरीश्वरस्तु ज्ञानेन प्रकाशेन सुपथं प्रकाशय-न्नितस्ततः प्रकृतैर्बाणकल्पैर्विद्भिः पृष्ठगामिनीनां सर्वासामात्मीयप्रजानां पापेभ्योऽरिष्टेभ्यो रक्षां सम्पादयति । तदिदं लोकेन सामान्यम् । लोकेऽग्निना प्रकाशेन समो भवेत् कदाचित् कश्चित् प्रकाशो, ज्ञानप्रकाशेन समस्तु न कश्चित् प्रकाशो विद्यते । लोकोत्तरत्वात् । तदिदमत्रद्योतयितुमेव ज्ञान-प्रकाश इत्यप्रयुज्य तत्स्थानेऽसित इति प्रयुज्यते । भास्वरः प्रकाशः सितः । तस्य नञा बहुव्रीहिः समासः । यत्समः कश्चित् भास्वरः शुभ्रः प्रकाशो न विद्यते सोऽयमसितो ज्ञानप्रकाश इत्यर्थः । मनुष्याणां

रक्षकं ज्ञानमिति निर्विवादम् । तच्च रक्षाविधौ यथाविधि प्रसारमपेक्षते यथा बाणः प्रक्षेपम् । तत्प्रसारकाश्च विद्याचुञ्चवो विद्वांसस्तपस्विनः । नहि तैर्विना पारमेश्वरं ज्ञानं प्रजासु सर्वत्र कथञ्चित् प्रसृतिं लभते । विद्वांसश्च भागवतज्ञानप्रसारकत्वान्मनुजान्तरापेक्षया विशिष्टाः । अतएव भगवन्तस्तेऽत्रादित्यनाम्ना बाणा इत्युपदिश्यन्ते **"आदित्या इषवः"** इति । आदित्यो जगद्गुरुरीश्वरः **"तदेवाग्निस्तदादित्यः"** (यजु० ३२।१) इति मन्त्रवर्णात् । आदत्ते परिष्वजते पापिनोऽपि शरणागतान् जनानिति वा योगात् । यत्रैतत्स्मृतं भवति **"मां हि पार्थ ! व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति पराङ्गतिम्"** (गीता० ९।३२) इति । तस्य पुत्रा आदित्याः । ते के स्युः? तज्ज्ञानप्रसारकास्तत्रभवन्तो विद्वांस इत्याचक्ष्महे । यद्यपि सर्वे वयं यूयं भगवतो जगद्गुरोरादित्यस्येश्वरस्य पुत्राः **"शृण्वन्तु विश्वे अमृतस्य पुत्राः"** ( ऋ० १०।१३।१ ) इति मन्त्रवर्णात्, तथापि ब्रह्मवर्चस्विनो भगवन्तो विद्वांस एव यथार्थतस्तत्पुत्राः समाख्यातुं शक्यन्ते नासदादयो हतत्विषः किङ्कराः परभृताः । पितापुत्रयोः सारूप्यस्यावश्यकत्वात् । सारूप्यं च तेजसा विद्यया न भूभारहेतुना शरीरधारणमात्रेण । **यद्वा** विश्वजननी भूरियमदितिः । यत्रैतच्छ्रुतं भवति **"इयं वै पृथिव्यदितिः"** (शतपथ० ५।३।५।३७) इति । **"इयं वा अदितिः"** (तै० सं० ३। २।६) इति च । तस्याः पुत्रा आदित्याः **"दित्यदित्यादित्यपत्युत्तरपदात्"** ( अष्टा० ४।१।८५ ) इति पाणिनिसरणादपत्ये ण्यः । यथा हि लोके तत्रभवन्ती जननी विद्याशौर्य्यदीप्त्या दीप्यमानैस्तनयैर्गरिमाणमाश्रयन्ती सर्वत्र पोपूज्यते तथा विश्वजननी भूमिरपि वीरकर्मभिर्विद्वद्भिः पुरुषसिंहैरात्मजैर्महिमानमनुभवन्ती सर्वथा मामह्यते । किं नु नामेहास्ति चित्रम् । यस्यां भूमौ वीरकर्माणो विद्वांसो न प्रजायन्ते सा भारवाहकैः किङ्करैः पुत्रवती भवन्त्यपि कृशतनूर्भुजिष्या इव पूजावेलायां क्व स्थानं विन्दते । पुत्रैरेव हि विद्यायां वीरकर्मणि चादित्यवद्देदीप्यमानैः सर्वत्र जनन्या इव जन्मभूमेरपि सत्कारः । तस्मादादित्यस्य भगवतो ब्रह्मणः पुत्रत्वा-

ददितेर्वा विश्वजनन्याः पृथिव्याः पुत्रत्वादादित्या विद्वांस इति साधु निर्ब्रूमहे । ते च भगवन्तो भागवतज्ञानप्रचाराय घोषेघोषे ग्रामेग्रामे नगरेनगरे सर्वेषु च जनपदेषु यत्र तत्र प्रसृताः स्युर्बाणा इव वाणा इति सर्वं संश्लिष्टम् ।

परिक्रम्यमाणायामस्यां प्राच्यां दिशि भगवानग्निरग्रणीर्जगद्गुरुरीश्वरोऽधिपतिः, रक्षको ज्ञानप्रकाशः, इषवस्तत्प्रसारका विद्यादीप्त्या देदीप्यमाना आदित्यास्तत्रभवन्तो विद्वांसः । ते सर्वे महामहिमत्वान्नमस्कर्तव्याः । तान् नमस्कुरुते **"तेभ्यो नमोऽधिपतिभ्यः"** इत्यादिना । नमस्कारे बहुवचनमादरार्थम् । आदरणीयेषु प्रायेण सर्वत्र बहुवचनं प्रयुञ्जते प्रयोक्तारोऽभिजाताः । अत्रापि तथाप्रयोगो नाननुरूपतामालम्बते । नमस्कृत्वा किञ्चिदावश्यकमुपस्थापयति **"योऽस्मान् द्वेष्टि"** इत्यादिना । यच्छब्देनात्र दुष्टप्रकृतिः पुरुषविशेषो गृह्यते, यः किल जगद्गुरुमीश्वरं न विश्वसिति, वैदिकं धर्मं च नानुतिष्ठति, वैदिकधर्मकाँश्च निष्प्रयोजनं सततं बाधते । यत्कारणमन्यत्रापि द्विषतस्तस्य शिक्षाभिप्रायेणाधःपातः प्राणदण्डश्चार्थ्यमानः श्रोश्रूयते **"यो नो द्वेष्ट्यधरः स स्पदीष्ट । यमु द्विष्मस्तमु प्राणो जहातु"** (ऋ० ३।५३।२१) इति । तथा रुद्राणां जम्भे निक्षेपोऽपि साक्षात् **"यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः"** (यजु० १६।६४) इति । स यथाऽकिञ्चिद्बुद्धिर्वैदिकान् जनानभीक्ष्णं द्वेष्टि तथा वैदिका जनाः स्वभावतो द्वेषमकुर्वाणा अपि तद्दुष्टप्रकृतिं पुरस्कृत्य नूनमेष स्वीयामिमां प्रकृतिं परित्यजेद् जगद्गुरुमीश्वरं च विश्वसेदित्यन्तर्बुद्धयस्तं प्रक्षिपन्ति । तत्र फलमदृष्ट्वा चान्ततो दण्ड एव दुष्टप्रकृतीनां जनानां दुष्टप्रकृतिपरित्यागे परमोपायो नान्यः कश्चनेति सनातनीं पद्धतिमनुसरन्तो भागवतं दण्डं शरणमृच्छन्ति **"तं वो जम्भे दध्मः"** इति । यो हि यस्याधिपत्ये वर्तते स तेनैव दण्ड्यः शिक्षितुं नान्येन केनचिदिति युक्तं दुष्टप्रकृतेस्तस्य शिक्षार्थं भगवतोऽधिपतेर्दण्डस्य शरणीकरणम् । मुखान्तर्गतो दन्तविशेषो जम्भः । तत्र तत्प्रक्षेपः शिक्षाभिप्रायेण न खादनाभिप्रायेण । शिक्षा पुनः किञ्चिच्चर्वणेन स्यात् खादनेन वा भवेत् स्वतन्त्रस्तत्र सर्वथाऽधिपतिर्धीमान् ॥६॥

प्राच्या दिशः परिक्रमणं व्यधायि । सम्प्रति दक्षिणस्याः क्रमः । दक्षिणेन परिक्रमितव्यमिति नियमात् । तत्रैवं विनियुक्तमन्त्रः पठ्यते—

**"दक्षिणा दिगिन्द्रोऽधिपतिस्तिरश्चिराजीरक्षिता पितर इषवः । तेभ्यो नमोऽधिपतिभ्यो, नमो रक्षितृभ्यो, नम इषुभ्यो, नम एभ्यो अस्तु । योऽस्मान् द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मः" ॥ ७ ॥** (अथर्व० ३।२७।२)

**दक्षिणा**=दक्षिणतोऽवस्थिता पूर्वाभिमुखस्य दक्षिणहस्ते वर्तमाना, **दिक्**=दिशा, **इन्द्रः**=सर्वैश्वर्य्यवानीश्वरः, **अधिपतिः**=स्वामी, **तिरश्चिराजिः**=नानाजातीयकर्माशयो, **रक्षिता**=रक्षकः, **पितरः**=कर्मिणः, **इषवः**=बाणाः । तेभ्यो नमः सर्वं पूर्ववत् ।

मुखसम्बन्धिनी खलु प्राची दिक् । यत्कारणं सा मुखस्याग्रे वर्तते । दक्षिणहस्तसम्बन्धिनी च दक्षिणा दिक् । यत्कारणं सा दक्षिणहस्ते विद्यते । अवाचीति चास्या एव नामान्तरम् । यत्कारणमस्यामवागच्छति भगवान् सूर्य्यः । अवागिति मध्याह्नस्य वचनम् । मुखस्य ज्ञानेन सम्बन्धो दक्षिणहस्तस्य चैश्वर्य्येण । यत्कारणं मुखेन ज्ञानं सम्पाद्यते दक्षिणहस्तेन चैश्वर्य्यम् । तस्यैव कर्मण्यधिकारात् । ज्ञानैश्वर्य्ययोश्च पूर्वं ज्ञानं सम्पद्यते पश्चादैश्वर्य्यम् । तत्पौर्वापर्य्यसम्बन्धस्य निश्चितत्वात् । अतएव प्रथमं प्राच्या दिशोऽग्रणीर्जगद्गुरुः सर्वज्ञेश्वरोऽधिपतिरुपदिश्यते, तदनु चास्या दक्षिणस्या दिशः सर्वैश्वर्य्यवानीश्वरः । सोऽयं दिशोरधिपत्यो रक्षकयोश्च परस्परसम्बन्धः । यथा ह्यग्रण्यः पुरतः खलु सर्वदा ज्ञानेन भवितव्यं, तथैश्वर्य्यवतः पुरतः सर्वदा कर्मणा वर्तितव्यम् । यत्कारणं कर्मणैव सर्वदा सर्वत्र सर्वमैश्वर्य्यमर्ज्यते रक्ष्यते च । नहि कर्माकुर्वन् कश्चिदैश्वर्य्यमर्जितुं रक्षितुं वा शक्नोति । मनुपुत्राणामस्माकं च कर्मैव सर्वस्यैश्वर्य्यस्यार्जकं रक्षकं च सततमिति निर्विवादम् । अतएवाह भगवान् वेदः **"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः"** (यजु० ४०।२) इति । **"नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः । शरी-**

रयात्राऽपि च ते न प्रसिध्येदकर्मणः ।" ( गी० ३।८ ) इति च भगवान् कृष्णः । ऐश्वर्य्यस्य नानाविधत्वात् तदर्जनरक्षणहेतुकर्म्मापि नानाविधम् । हेतुमन्नानात्वे हेतुनानात्वस्यौचित्यात् । अत एव मन्त्रे कर्म्मप्रयुज्य तत्स्थाने नानाजातीयकर्म्माशयवचनस्तिरश्चिराजिशब्दः प्रयुज्यते । स च बहुव्रीहिसमासेन समस्तः । तत्र तिरश्चिशब्दो नानाजातीयवचनः । यत्रैतच्छ्रुतं भवति "पृथुं तिरश्चा वयसा बृहन्तम्" ( ऋ० २।१०।४ ) इति । तिरश्चा=नानाजातीयेन, वयसा=अन्नेन, बृहन्तं=प्रवृद्धं पृथुं चाग्निम् । राजिशब्दश्च श्रेणिवचनः प्रसिद्धः । अन्यपदार्थः कर्म्माशयोऽत्रैश्वर्य्ययोगात् समधिगम्यते । नियतसम्बन्धात् । कर्म्माशयः कर्मेति चात्रानर्थान्तरम् । तच्च नानाश्रेणिकं दृष्टचरं नापलपितुं शक्यते । तथा च तिरश्चयो नानाजातीया राजयः श्रेणयो यस्य कर्म्माशयस्य, स तिरश्चिराजिर्नानाश्रेणिकः कर्म्माशय इति सुनिष्पन्नम् । तस्यैतस्य कर्म्माशयस्य वाणाः पितरः=कर्मिणः, तैरेव कर्मप्रचारसिद्धेः । पितृशब्दश्च कर्मिवचनोऽतिरोहितः । "द्वे स्रुती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम्" ( ऋ० १०।८८।१५ ) इति मन्त्रवर्णात् । मर्त्यानां=मनुष्याणां ये पितरः=कर्मिणः, ये उत=च देवाः=उपासकाः, तेषां द्वे स्रुती=पितृयानाख्यां देवयानाख्यां च स्रुतिमहमशृणवमिति मन्त्रवर्णार्थः । यथा हि पूर्वत्र खलु सर्वज्ञस्य जगद्गुरोरग्न्योऽधिपतेर्ज्ञानेन सम्बन्धः, ज्ञानस्य च तत्प्रसारकैर्विद्वद्भिः, तथेह सर्वैश्वर्य्यवतोऽधिपतेः कर्मणा सम्बन्धः, कर्मणश्च तत्प्रसारकैः कर्मिभिरिति न किञ्चिदसंश्लिष्टम् । तेभ्योनमःप्रभृति सर्वं पूर्ववद् व्याख्येयम्॥७॥

परिक्रान्ता दक्षिणा दिक्, अथ प्रतीची दिक् परिक्रमणीया । क्रमप्राप्तत्वात् । तत्रास्य मन्त्रस्य विनियोगः—

**"प्रतीची दिग् वरुणोऽधिपतिः पृदाकूरक्षिताऽन्नमिषवः । तेभ्यो नमोऽधिपतिभ्यो, नमो रक्षितृभ्यो, नम इषुभ्यो, नम एभ्यो अस्तु । योऽस्मान् द्वेष्टि, यं वयं द्विष्मस्तं वो जम्भे दध्मः ॥ ८ ॥** ( अथर्व० ३।२७।३ )

**प्रतीची**=पश्चिमा पृष्ठभागस्था, **दिक्**=दिशा, **वरुणः**=जीवनप्रदेश्वरः, **अधिपतिः**=स्वामी, **पृदाकुः**=प्राणः, **रक्षिता**=रक्षकः, **अन्नम्**=अन्नाद्यं व्रीहियवादिकम्, **इषवः**=बाणाः। तेभ्यो नमः सर्वं पूर्ववत्।

या हि दिक् पूर्वाभिमुखस्य पृष्ठभागे वर्तते सा प्रतीचीति व्याख्यायते। प्रातिकूल्येनाञ्चति प्राप्नोति सूर्य्योऽस्यामिति तद्व्युत्पत्तेः। प्राच्यामुदयः, प्रतीच्यामस्तमय इति प्राच्यपेक्षया प्रतीच्यां प्रातिकूल्यम्। एतामेव दिशं पश्चिमेति व्यपदिशन्ति दिग्विदः कोविदाः। सा यथा परिक्रमायामपेक्ष्यते दक्षिणदिगनन्तरं, तथैश्वर्य्यानन्तरमपेक्ष्यते जीवनम्। यत्कारणं जीवने सत्येवैश्वर्य्यमुपभोक्तुं शक्यते। नहि कश्चिदजीवन्नैवैश्वर्य्यमुपभोक्तुं शक्नोति। भवति वा तस्मिन् जीवनं न काङ्क्षति। जीवनवहा नाडी च पार्ष्ठिकं मेरुदण्डमधिवसतीति योगविदां परामर्शः। को नु नाम योगतत्त्वं विदन् पृष्ठस्थं मेरुदण्डं जीवनाधिष्ठानं नानुमन्यते। जगद्गुरुरीश्वरश्च जीवनदाता सुप्रसिद्धः। यत्रैतदाम्नातं भवति **"य आत्मदा बलदा यस्य विश्व उपासते"** (ऋ० १०।१२१।२) इति। जीवनवहनाड्या च जीवनदातुरीश्वरस्य साम्मुख्यमावश्यकम्। तस्मिन् सत्येव जीवनातिशयसम्भवात्। तदिदमभिलक्ष्यैव पृष्ठभाजोऽस्याः प्रतीच्या दिशो जीवनप्रदेश्वरोऽधिपतिर्निर्दिश्यते **"वरुणोऽधिपतिः"** इति। वरुण इत्यस्य जीवनाय वरणीयोऽर्थः। यत्रैतदाम्नातं भवति **"अहेळमानो वरुणेह बोध्युरुशंस! मा न आयुः प्रमोषीः"** (ऋ० १।२४।११) इति। जीवनाय च जीवनदातैव सर्वदा वेव्रीयते नान्यः। तस्माद्युक्तस्तत्र तन्निर्देशः।

**यथैश्वर्य्यस्य** कर्मणा सम्बन्धस्तथा जीवनस्य प्राणेन सम्बन्धः। यावद् ह्यस्मिन् शरीरे प्राणस्तिष्ठति तावज्जीवनं, प्राणाभावे च जीवनाभावः। तदनेन जीवनस्याश्रयः प्राण इति निश्चितम्। आश्रयः सर्वत्र रक्षको भवति, रक्ष्यश्चाश्रित इति नियमः। जीवनमाश्रितम्, आश्रयः प्राणः। अत एव मन्त्रे जीवनवतामस्माकं रक्षकः प्राण उपदिश्यते **"पृदाकूरक्षिता"** इति। पृदाकुरिति प्राणस्य नाम। यत्रैतदाम्नातं

भवति **"पृदाकुसानुर्यजतो गवेषण एकः सन्नभि भूयसः"** (ऋ० ८।१७।१५) इति । **पृदाकुसानुः**=प्राणवत्सम्भजनीयः । **यजतः**=यष्टव्यः । **गवेषणः**=मोक्षसुखस्य संसारसुखस्य च प्रापयिता दाता, मोक्षसुखाय गवेषितव्योऽन्वेष्टव्यो वा, **अभि**=अभिभवति, **भूयसः**=बहून् शत्रून् । प्राणो हि पीड्यमानः कदाचित् कुत्सितं शब्दायत इति योगादपि सम्पद्यते निःसंशयमत्र पृदाकुः प्राणः ।

यथा हि रक्षकः खलु रक्षाविधाने नियमेनेषूनपेक्षते, ज्ञानं वा विदुषः, कर्म वा कर्मिणः, तथा प्राणोऽन्नमपेक्षते । नह्यसाविष्वाद्यभावे रक्षकादिवदन्नाभावे कथञ्चिद् रक्षां विधातुमीष्टे । अस्ति च रक्षकादिनेष्वादिवदन्नस्य प्राणेन सम्बन्धः श्रुतिसिद्धः **"स तपस्तप्त्वा मिथुनमुत्पादयते प्राणं च रयिं च"** (प्रश्नो० १।३) इति । **रयिम्**=अन्नम् । **"अन्नं हि प्राणान् बिभर्त्ति"** (शतपथ० ८।१।३।१) **"प्राणो वा अन्नम्"** (तै० २।७) इति च । प्रशस्तं नूनं सर्वेभ्योऽन्नेभ्यः प्राणस्य रक्षकं व्रीहियवादिकमन्नम् । अतएव समाम्नायते भगवति वेदे **"अध्वर्यवो! यो दिव्यस्य वस्वो यः पार्थिवस्य क्षम्यस्य राजा । तमूर्दरं न पृणता यवेनेन्द्रं सोमेभिस्तदपो वो अस्तु"** (ऋ० २।१४।११) इति । हे अध्वर्य्यवः! यो दिव्यस्य यः पार्थिवस्य क्षम्यस्य च **वस्वः**=वसुनो राजा, तमिन्द्र**मूर्दरम्**=आवपनं **न**=इव **यवेन**=व्रीह्यादेरुपलक्षणमेतत्, व्रीहियवादिनाऽन्नेन **सोमेभिः**=सोमरसैः **पृणत**=पूरयत, **तदपः**=तदिदं कर्म, **वः**=युष्माकमस्तु=भवतु सार्वदिकमिति समाम्नातमन्त्रपदार्थः । तस्मादिह रक्षकस्य प्राणस्येषवो व्रीहियवादिकमन्नमिति युक्तमभिहितं भवति नायुक्तम् । तेभ्योनमःसर्वं पूर्ववद् व्याख्यातं वेदितव्यम् ॥ ८ ॥

प्रत्यग्दिगनन्तरमुदीची दिक् परिक्रम्यते । क्रमप्राप्तत्वात् । तत्र चैष विनियुक्तमन्त्रपाठः—

**"उदीची दिक् सोमोऽधिपतिः स्वजो रक्षिताऽशनि-**

**रिषवः। तेभ्यो नमोऽधिपतिभ्यो, नमो रक्षितृभ्यो, नम इषुभ्यो, नम एभ्यो अस्तु। योऽस्मान् द्वेष्टि, यं वयं द्विष्मस्तं वो जम्भे दध्मः" ॥ ९ ॥** (अथर्व० ३।२७।४)

**उदीची**=वामहस्तेऽवस्थिता, **दिक्**=दिशा, **सोमः**=प्रियदर्शनः, **अधिपतिः**=स्वामी, **स्वजः**=स्वं शरीरं, तज्जनयिता चरमो धातुः, **रक्षिता**=रक्षकः, **अशनिः**=ब्रह्मचर्य्यम्, **इषवः**=बाणाः, तेभ्योनमः सर्वं पूर्ववत्।

यस्यां दिशि भगवान् विवस्वानुदगच्छति दूरमूर्ध्वं प्राप्नोति सा दिगुदीचीति संज्ञायते। दिगन्तरापेक्षयोर्ध्वतरत्वादुत्तरा, वामहस्ते भवाद् वामा चैषैव दिग् प्रतिज्ञायते। **उत्तरा**=उच्चतरा, **वामा**=मनोहरा प्रियदर्शना चेति त्रयं समानार्थम्। अस्ति च दिगन्तरापेक्षयोदीची दिगुच्चतरा प्रियदर्शना च सर्वानुभवसिद्धा। नहि मनुजो भवति तत्प्रियदर्शनतां च नानुभवतीत्युदाहर्तुं शक्यते। यथा च दिक् प्रियदर्शना तथा तत्स्वामिनाऽपि प्रियदर्शनेन भवितव्यम्। अनुरूपसम्बन्धस्यौचित्यात्। नहि दिक् प्रियदर्शना स्यात् स्वामी च तस्याः प्रियदर्शनो न भवेदिति कथञ्चित् संश्लिष्यते। योऽग्रणीर्विद्यते, वर्तते चेश्वरो जीवनदाता च, स प्रियदर्शनोऽपि स्यादिति बहु सुसम्बद्धमवलोकामहे। यस्य कृपया किलार्य्याः सर्वासां प्रजानामग्रण्यः, सर्वासां प्रजानामीश्वराः सर्वासां प्रजानां जीवनदातारः, सर्वासां प्रजानां प्रियदर्शना अभूवन्, भविष्यन्ति च, स जगद्गुरुरीश्वरः सर्वासु दिक्षु वर्तमानो भवन्नग्रणीर्भवन्नीश्वरो भवन् जीवनदाता, प्रियदर्शनो न भवेदिति न कस्यचिदन्तर्हृदयस्य मनो मन्यते। अग्रणीत्वादिभिः प्रियदर्शनतासमवायस्यावश्यम्भावित्वात्। समवाये चोदाहरणमार्य्यकुलनन्दनः पुरुषव्याघ्रो राजर्षिवर्य्यः खलु पाञ्चनदः **श्रीगुरुगोविन्दमृगेन्द्रः**, साक्षात्क्षत्रश्रीरार्य्यकुलदिवाकरो मनुजपञ्चास्योऽतुलप्रतापो वा श्रीमान् **प्रतापो** नरेन्द्रः, सनातनधर्ममूर्तिरखिललोकवन्द्यो मर्य्यादापुरुषोत्तमो वा जानकीवल्लभो भगवान् **रामचन्द्रः** प्रव्यक्तम्। अतो युक्तः

प्रियदर्शनायास्तस्या उत्तरस्या दिशोऽधिपतिरपि प्रियदर्शनः । तदिदमनुसन्धायैवोच्यते "**उदीची दिक् सोमोऽधिपतिः**" इति । **सोमः**=प्रियदर्शनो जगद्गुरुरीश्वरः । यत्रैतदाम्नातं भवति "**ये पाकशंसं विहरन्त एवैर्ये वा भद्रं दूषयन्ति स्वधाभिः । अहये वा तान् प्रददातु सोम आ वा दधातु निर्ऋतेरुपस्थे**" (ऋ० ७।१०४।९) इति । ये दुष्प्रकृतयो मां **पाकशंसं**=परिपक्ववचनं सत्यभाषिणमे**वैः**=एवकैः प्राप्तव्यैरात्मीयतत्तत्कामैर्हेतुभूतैर्**विहरन्ते**=विशेषेण हरन्ति परिवदन्ति, ये वा **स्वधाभिः**=धनधान्यादिहेतुकैर्बलैर्**भद्रं**=कल्याणवर्तिनं मां **दूषयन्ति**=दुष्टं कुर्वन्ति, तान् सर्वान् **सोमः**=प्रियदर्शनो भगवानीश्वरोऽ**हये वा**=सर्पाय वा प्रददातु **निर्ऋतेः**=पापदेवताया **उपस्थे**=उत्सङ्गे **वाऽऽदधातु**=प्रक्षिपत्वित्यर्थः ।

प्रियदर्शनः खलु सर्वो वीर्य्येण भवति । वीर्य्याभावे प्रियदर्शनताया अभावात् । नहि वीर्य्यं न विद्यते अस्ति च प्रियदर्शन इति कश्चिदीक्ष्यते । नूनं रूपं लावण्यं च सर्वं सर्वत्र वीर्य्यनिबन्धनम् । न्यूनमुच्यते यदिदं देशगौरवं जातिगौरवमात्मगौरवं च, तत्सर्वं वीर्य्यकारणकम् । वीर्य्यवन्तो हि देशगौरवं जातिगौरवमात्मगौरवं च सततं रक्षितुं प्रकल्पन्ते न वीर्य्यहीनाः कापुरुषाः । मनुवंशजाश्चात्मतो जातितो देशतः स्ववीर्य्यगुप्ताः प्रसिद्धाः । यत्रेदमाह कालीदासोऽपि रघुवंशे "**स्ववीर्य्यगुप्ता हि मनुप्रसूतिः**" इति । तदिदं वीर्य्यं यथेह तथाऽमुत्र रक्षकं समानम् । अतएवोच्यते "**स्वजो रक्षिता**" इति **स्वजः**=चरमो धातुर्वीर्य्यम् । जनयति स्वं शरीरं, जायते वा शरीरात्स्वादिति तद्व्युत्पत्तेः । भवति चान्नादिपरिपाकेण शरीराद्वीर्य्योत्पत्तिः, वीर्य्याद्वा शरीरोत्पत्तिरिति लोकवच्छ्रुतिसिद्धम् "**रेतसः पुरुषः**" (तै० २।१) इति । तस्यैतस्य वीर्य्यस्य प्रियदर्शनताप्रयोजकत्वं चाम्नायते साक्षाद् भगवति वेदे "**वव्रासो न ये स्वजाः स्वतवस इषं स्वरभिजायन्त धूतयः**" (ऋ० १।१६८।२) इति । **वव्रासः**=प्रियदर्शनाः । **स्वजाः**=स्वजप्रयुक्ताः । स्वजो वीर्य्यम् । **स्वतवसः**=

बृंहितशरीराः । यथा वीर्य्यस्य स्वजो नाम, तथाऽन्तिमधातुश्चरमधातुरित्यपि नामान्तरं द्रष्टव्यम् ।

यथा हि रक्षकः प्राणः खलु रक्षार्थं शास्त्रदेशितं सत्त्वबहुलं व्रीहियवादिकमन्नमपेक्षते, यत्रैतत् समाम्नातं भवति **"तं सन्नाया! पुरोरुचं यूयं वयं च सूरयः । अश्याम वाजगन्ध्यं सनेम वाजपस्त्यम्"** ( ऋ० ९।९८।१२ ) इति, तथा वीर्य्यं शास्त्रदेशितं ब्रह्मचर्य्यमपेक्षते । तदभावे रक्षाविधानस्याशक्यत्वात् । नहि यावद् यथाशास्त्रं ब्रह्मचर्य्यं नानुष्ठीयते तावत् स्वरूपेण सताऽपि रक्षकेण वीर्य्येण कथञ्चिद् रक्षा विधातुं क्षम्यते । बाणस्थानापन्नं हि रक्षकस्य तस्य शास्त्रदेशितं ब्रह्मचर्य्यम् । तच्चात्राशनिशब्देनाभिधीयते **"अशनिरिषवः"** इति । **अशनिः**=ब्रह्मचर्य्यम् । अश्यते संहन्यते शरीरमनेनेति तद्व्युत्पत्तेः । संहननकर्मणोऽश्नोतेरनिप्रत्ययः । संहननं सङ्घातोऽवयवानां दृढः संयोगः । यथाशास्त्रमनुष्ठीयमानो योऽवयवव्यूहदार्ढ्येण शरीरमिदं वज्रोपमं विधत्ते सोऽशनिरिति तन्निष्कर्षः । **अश्नोतेर्वा** स्यात् खादनकर्मणोऽनिप्रत्ययः । यो रोगान् समस्तानश्नाति रोगा वा समस्ता येनाश्यन्ते सोऽशनिरिति तत्र तद्व्युत्पादनम् । ब्रह्मचर्य्यं हि यथाशास्त्रमनुष्ठीयमानमवयवव्यूहदार्ढ्येण शरीरमिदं वज्रोपमं रोगान् समस्तानपहत्य रूपलावण्यसमन्वितं च विधत्त इति कस्य नापरोक्षम् । को नु नाम पुमान् चक्षुष्मान् भवन्नेतद् ब्रह्मचर्य्यमाहात्म्यं प्रत्यक्षतो न पश्यति । **वज्रोऽशनिरित्यपरो मार्गः** । तत्रापि शरीरस्य वज्रभावे हेतुत्वाद् भवेदशनिर्ब्रह्मचर्य्यं यथा शरीरस्य तेजस्विभावे हेतुत्वाद् घृतं तेजः **"तेजो वा आज्यम्"** (ताण्ड्य० १२।१०।१८) इत्यादिश्रुतिभ्य इत्यविरोधः । **तेजः**=शरीरकान्तिः । **आज्यं**=विलीनं घृतम् । दृश्यते च वज्रभावहेतुत्वनिबन्धनो घृतेऽशनिपर्य्यायवज्रशब्दप्रयोगोऽपि श्रुत्यन्तरेषु **"घृतेन हि वज्रेणेन्द्रो वृत्रमहन्"** (ऐतरेयब्रा० ४।९) **"वज्रो ह्याज्यम्"** ( शतपथ० १।३।५।१७ ) इत्येवञ्जातीयकेषु । यथा खलु ब्रह्मचर्य्यं शास्त्रविधानेनानुष्ठीयमानं शरीरमिदं वज्रभावमभि-

नयति, तथा सुरभिघृतमधमानमिति सामान्यम् । तस्मादशनिर्ब्रह्मचर्य्यमिति सङ्गतं विवरणम् । तेभ्योनमःसर्वं पूर्ववद् व्याख्यातं द्रष्टव्यम् ॥९॥

उत्तरदिगनन्तरमधोदिक्क्रमः । तत्र विनियुक्तमन्त्रस्यैष पाठः—

**"ध्रुवा दिग् विष्णुरधिपतिः कल्माषग्रीवो रक्षिता वीरुध इषवः । तेभ्यो नमोऽधिपतिभ्यो, नमो रक्षितृभ्यो, नम इषुभ्यो, नम एभ्यो अस्तु । योऽस्मान् द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मः" ॥ १० ॥** (अथर्व० ३।२७।५)

ध्रुवा=निश्चला, दिक्=दिशा, विष्णुः=व्यापको जगद्गुरुरीश्वरः, **अधिपतिः**=स्वामी, **कल्माषग्रीवः**=आचार्य्यः, **रक्षिता**=रक्षकः, **वीरुधः**=छात्राः, इषवः=बाणाः, तेभ्योनमः सर्वं पूर्ववत् ।

यस्यां दिशि प्रतिष्ठाय प्राच्याद्याः सर्वा दिशः परिकल्प्यन्ते सा ध्रुवा दिगिति व्यवहारं भजते । यत्कारणं सा प्राच्यादिसर्वदिगपेक्षया निश्चला वरीवृत्यते । अत एवैनां बह्वृचाः प्राच्यादीनां सर्वासां दिशां मध्ये वर्तमानान्मध्यमां, प्राच्यादिसर्वदिगपेक्षया प्रतिष्ठितत्वाच्च **प्रतिष्ठां** दिशमाचक्षते **"तस्मादस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां राजानः सवशोशीनराणाम्"** (ऐतरेयब्रा० ३९।१) इति । परिकल्पकानां मनुष्याणामधोभागे भवनाच्चैषैवाधोदिगिति व्यपदेशं लभते। देशो दिगिति चैकोऽर्थः। सम्प्रति राज्यश्रीभुजामाङ्गलानामाङ्गलो नामाभिजनो ध्रुवा दिग् । यत्कारणं ते तत एव प्राच्याद्याः सर्वा दिशः परिकल्पयन्ति । मनुवंशजानामस्माकमार्य्याणाञ्चार्य्यावर्तो नामाभिजनो ध्रुवा दिग् । यत्कारणमस्माभिरत एव प्राच्याद्याः सर्वा दिशः परिकल्प्यन्ते । साधु स्पष्टीक्रियते स चैषोऽर्थः **"तस्मादस्याम्"** इत्युदाहृतश्रुतौ भाष्ये सर्ववेदभाष्यकर्त्रा सायणाचार्य्येण **"मध्यमा=दिङ्मध्यदेशः । स प्राच्यादिभिः सर्वाभिरपेक्षितत्वेन ध्रुवो भवति । तदपेक्षयैव पूर्वा पश्चिमेत्यादिव्यवहारः । स च देशः सर्वेषां वैदिकानामाश्रयः"**

इति। येषां च या काचिद् ध्रुवा दिक्, ते तत एव विद्यया वाणिज्येन राजलक्ष्म्या च सोत्साहं सर्वा दिशो व्याश्नुवते। नहि येषां जापानाभिजनो नाम ध्रुवा दिक्, ते कदाचिदार्य्यावर्ततो विद्यादिभिर्निमित्तैः प्राच्याद्याः सर्वा दिशो व्याशितुं कल्पन्ते। तादृक्षव्याप्त्या च मनुष्याणां तद्दिगेव व्याप्ताऽनुमन्यते। को नु नाम स्यात् सूक्ष्मदृक्पुमान् यः किल पुण्यतमां तां व्याप्तिमतीं नानुमन्येत, यस्याः किल पुत्रनागाः प्राच्याद्याः सर्वा दिशो विद्यया वाणिज्येन राजलक्ष्म्या च सोत्साहं व्याप्नुवन्ति। यदा खलु दिग् व्याप्तिमती, तदा तत्स्वामिनाऽपि व्याप्तिमता भवितव्यम्। सारूप्यस्य सर्वत्र न्याय्यत्वात्। तदिदमालोच्यैवाम्नायते **"विष्णुरधिपतिः"** इति। **विष्णुः**=व्याप्तिमानीश्वरः। वेवेष्टि सर्वं जगदिति तद्व्युत्पत्तेः। व्याप्तिमान् व्यापक इति च समानोऽर्थः। व्याप्तिं च तस्य सर्वत्र श्रावयति वैदिकी श्रुतिः **"स ओतश्च प्रोतश्च विभूः प्रजासु"** (यजु० ३२।८) इति। **"नित्यं विभुं सर्वगतं सुसूक्ष्मम्"** (मुण्डको० १।१।६) **"अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च"** (कठो० ६।८) इति च। **सा** चेयं व्याप्तिर्न तावद्रक्षितुं पार्य्यते यावत् कश्चिदाचार्य्यो न भवेत्। आचार्य्य एव भगवतो जगद्गुरोरीश्वरस्यास्मदादेश्च मनुष्यवर्गस्य व्याप्तेः सर्वत्र रक्षिता। यत्र हि मनुष्यजातौ कश्चिदाचार्य्यो न विद्यते सा तूर्णमज्ञानेन व्यामोमुह्यमाना सर्वासु प्राच्याद्यासु दिक्षु विद्यादिनिमित्तेन सम्पादितामपि स्वीयां चिरन्तनीं व्याप्तिं नाशयते, जगद्गुरोरीश्वरस्य व्याप्तिं चैकपदे निह्नुते। नह्येतदस्ति कस्यापि प्रज्ञावतो मनुवंशजस्याप्रत्यक्षम्। आचार्य्यो ह्येनां गाढमज्ञाननिद्रया प्रसुप्तां ज्ञानयष्ट्याघातेन दैनन्दिनं प्रबोधयति, तद्व्याप्तिं च सर्वासु प्राच्याद्यासु दिक्षु यथाशक्यं सम्पादयति, जगद्गुरोरीश्वरस्य व्याप्तिं चा पृथिव्या आ च दिवो लोकाद्व्यवस्थापयति श्रद्धापयति चेति क्वास्ति मात्रयाऽपि नाम तिरोहितम्। किं बहुना यथा मनुष्याणामग्रणीभावे ज्ञानमावश्यकम्, ईश्वरभावे कर्म, जीवने प्राणः, प्रियदर्शनतायां च वीर्य्यं, तथा भूमिमण्डले व्याप्त्याः सम्पादने रक्षणे चाचार्य्योऽप्यावश्यकः। तं विना तत्सम्भवाभावात्।

सोऽयमाचार्य्योऽत्र कल्मापग्रीवशब्देन प्रतिपाद्यते **"कल्माषग्रीवो रक्षिता"** इति । कल्मापग्रीव इति समस्तं पदम् । द्विपदबहुव्रीहिः । तत्र कल्मापस्य पूर्वं रूपं कर्मासः । रेफस्य लः, सस्य षः, पृषोदरादित्वात् । देशजात्यात्महितसाधनेषु कर्मसु सततमधिकारिणो जनानस्यति क्षिपति प्रेरयति यो भूतभौतिकगोचरोऽध्यात्मगोचरश्च शास्त्रजन्योऽनुभवः स कर्मासः । अध्यात्मविद्या पदार्थविद्या चेति तन्निष्कर्षः । अनुभवः, प्रत्ययः, साक्षात्कारो विद्येति चानर्थान्तरम् । स चानुभवो ग्रीवायां कण्ठे यस्य स कर्मासग्रीवः । स एव रेफस्य लत्वेन सस्य पत्वेन च कल्मापग्रीवस्तत्रभवानध्यात्मविद्यापदार्थविद्याकण्ठः साक्षाद्भगवतो जगद्गुरोर्ब्रह्मणो मूर्तिराचार्य्यः । लोके खलु शुक्लकृष्णमिश्रिते वर्णे कल्मापशब्दः प्रायेण व्याख्यायते । यत्रैतदुदाहृतं भवति **"शुक्लगुणः शुक्लः, कृष्णगुणः कृष्णः, य इदानीमुभयगुणः स तृतीयामाख्यां लभते कल्माप इति"** (महाभाष्य० १।२।३१) इति । तदनुरोधेऽपि कल्मापशब्दो न तावदाचार्य्यार्थतां विजहाति । यत्कारणं प्रकृतेस्तमस्त्वेन तत्सम्बन्धिनी पदार्थविद्या कृष्णा, ब्रह्मात्मनोर्ज्योतिष्ट्वेन तत्सम्बन्धिन्यध्यात्मविद्या शुक्ला, तदुभयमिश्रितविद्या च शुक्लकृष्णमिश्रितरूपवदाञ्जस्येन कल्मापशब्दा घटते, नास्ति काचिदनुपपत्तिः । प्रकृतेस्तमस्त्वं ब्रह्मात्मनोर्ज्योतिष्ट्वं च **"उद् वयं तमसस्परि"** ( ऋ० १।५०।१० ) इत्युपस्थानमन्त्रे व्याकरिष्यते । कल्मापग्रीवोऽम्बिकापतिर्भगवान् **शिव** इति पौराणिकी वार्ता । तत्राप्याचार्य्यः कल्मापग्रीव इत्यविरुद्धम् । तस्य तद्रूपत्वोपचारात् । अध्यात्मादिसर्वविद्याचार्य्यश्चोमापतिर्भगवान् शङ्करो लोकविश्रुत इति नोपचारानुपपत्तिः । शिवः शङ्कर इति चैकोऽर्थः ।

कल्मापग्रीवोऽध्यात्मविद्यापदार्थविद्याचार्य्यो रक्षकः । तस्य रक्षार्थे विद्यते बाणापेक्षा । आचार्य्यस्य च बाणाश्छात्राः प्रसिद्धाः । स हि सर्वं कार्य्यं छात्रैरेव सम्पादयतीति को नु नाम न जानाति । येषामध्ययनार्थमाचार्य्यस्य विविधं छादनं शीलं, तेऽन्तेवासिनश्छात्राः । ते च महाभागा मन्त्रे गुणसामान्येन वीरुध इत्युपादीयन्ते **"वीरुध इषवः"** इति ।

**वीरुधः**=लताः। यथा हि रसादानार्थं शाखिनं विविधं रुन्धन्ति छादयन्ति वीरुधो लतास्तथा विद्यादानार्थं तत्रभवन्तमाचार्य्यमन्तेवासिनश्छात्रा इति गुणसामान्यम्। शौर्य्यक्रौर्य्यादिगुणसम्पन्नेषु क्षत्रियवीरेषु सिंहशब्दवद् विद्यारसादानार्थमाचार्य्यद्रुमाच्छादनादिगुणसम्पन्नेषु छात्रेषु वीरुच्छब्दप्रयोग इत्यभिप्रायः। अस्तु वा साक्षाद् वीरुधश्छात्राः। रूपभेदेऽप्यर्थभेदाभावात्। समाम्नायते च **"इदं जनासो! विदथ महद् ब्रह्म वदिष्यति। न तत् पृथिव्यां नो दिवि येन प्राणन्ति वीरुधः"** (अथर्व० १।३२।१) इति। येन महता **ब्रह्मणा**=वेदेन **वीरुधः**=ब्रह्मचारिणश्छात्राः **प्राणन्ति**=जीवन्ति, ब्रह्म हि छात्राणां ब्रह्मचारिणां प्राण इत्याशयः, तन्महद् ब्रह्म यद् **वदिष्यति**=वदति, तदिदं **जनासः**=हे जना **विदथ**=यूयं जानीथ, यत्कारणं न पृथिव्यां नो दिवि **तत्**=तत्तुल्यं किञ्चिद् विद्यत इति मन्त्रपदार्थः। तेभ्योनमः सर्वं पूर्ववद् व्याख्येयम् ॥ १० ॥

अथोर्ध्वदिक्क्रमः। तत्परिक्रमायामेष मन्त्रः पठितव्यः—

**"ऊर्ध्वा दिग् बृहस्पतिरधिपतिः श्वित्रो रक्षिता वर्षमिषवः। तेभ्यो नमोऽधिपतिभ्यो, नमो रक्षितृभ्यो, नम इषुभ्यो, नम एभ्यो अस्तु। योऽस्मान् द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मः" ॥ ११ ॥** (अथर्व० ३।२७।६)

**ऊर्ध्वा**=उपरिष्टाद्वर्तमाना, **दिक्**=दिशा, **बृहस्पतिः**=बृहत्या वेदवाण्याः पतिः, **अधिपतिः**=स्वामी, **श्वित्रः**=यज्ञः, **रक्षिता**=रक्षकः, **वर्षं**=वृष्टिः, **इषवः**=बाणाः, तेभ्योनमः सर्वं पूर्ववत्।

या हि दिगुपरिष्टान्मूर्ध्नो बोभूयते सोर्ध्वा दिगिति व्यवह्रियते। तस्या ऊर्ध्वत्वे च तत्स्वामिनाऽप्यूर्ध्वेन भवितव्यम्। यथायोग्यसम्बन्धस्य न्याय्यत्वात्। ऊर्ध्वश्च वेदवाण्याः पतिरीश्वरः। यत्कारणं सा सर्ववाण्यपेक्षयोर्ध्वा वरीवृत्यते। यत्रैतदुदाहृतं भवति **"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः"**

(महाभार० १२।२३३।२४) इति । यस्य किल वाणिरूर्ध्वा स स्वयमूर्ध्व इति किन्तु वक्तव्यम् । सोऽयमूर्ध्वो वेदवाणिपतिरीश्वरोऽत्र बृहस्पतिशब्देन कीर्त्यते "बृहस्पतिरधिपतिः" इति । बृहत्या वेदवाण्याः पतिरीश्वरो बृहस्पतिरिति शब्दार्थः । सोऽयं मन्त्रान्तरेणानुगम्यते "अस्मे धेहि द्युमतीं वाचमासन् बृहस्पते! अनमीवामिषिराम् । यया वृष्टिं शन्तनवे वनाव दिवो द्रप्सो मधुमाँ आविवेश" (ऋ० १०।९८।३) इति । यदा खलु वेदवाण्याः पतिर्बृहस्पतिरधिपतिस्तदा वेदवाणिप्रतिपाद्यो यज्ञ एव रक्षको वक्तव्यः । यत्कारणं यज्ञार्थमेव सर्गादौ वेदवाण्याः प्रादुर्भावः पापठ्यते "अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् । दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्" (मनु० १।२३) इति । यज्ञस्य रक्षकत्वं धर्मत्वान्निर्विवादम् । अतएव स प्रजामात्रस्य सर्वेष्टकामधुक् सास्मर्यते भगवद्गीतायाम् "सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्" (गी० ३।१०) इति । धर्मो नूनं यज्ञ इति साक्षादाम्नायते च भगवति वेदे "यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्" (ऋ० १०।८०। इत्यादिभिर्मन्त्रवर्णैः । स एष धर्मो यज्ञोऽत्र श्वित्रशब्देनोपादीयते "श्वित्रो रक्षिता" इति । श्वित्र इत्यत्र "स्फायितञ्चिवञ्चि" (उणा० २।१७०) इत्यादिना श्वततेरक्प्रत्ययः । यः स्वयं श्वेतः शुभ्रः शुक्लो भवन् स्वाश्रयं परं श्वेतते शुक्लीकुरुते स श्वित्रः=श्वेतः शुभ्रः शुक्ल इत्यर्थः । यज्ञो धर्मो निश्चितस्तावदेवंस्वभावः । यदाऽनुष्ठीयते तदैव श्वेतः शुभ्रः शुक्लो जायमानः स्वाश्रयं नरं शुक्लं विधत्ते । यत्रेदमाह मुनिवरो हारीतः "यज्ञेन लोका विमला भवन्ति यज्ञेन देवा अमृतत्वमाप्नुवन् । यज्ञेन पापैर्बहुभिर्विमुक्तः प्राप्नोति लोकानजरस्य विष्णोः" इत्यादिना यज्ञमहिमानमुपवर्णयन् । धर्मस्य शुक्लं रूपमधर्मस्य च कृष्णं सर्वसम्मतम् । अतएव धर्मे शुक्लपदमधर्मे च कृष्णपदं प्रयुङ्क्ते योगदर्शनकृद् भगवान् पतञ्जलिः "कर्माशुक्लाकृष्णं

**योगिनस्त्रिविधमितरेषाम्"** ( यो० ४।७ ) इति । **"चतुष्पदी खल्वियं कर्मजातिः कृष्णा शुक्लकृष्णा शुक्लाऽशुक्लाकृष्णा चेति । तत्र कृष्णा दुरात्मनाम् । शुक्लकृष्णा बहिःसाधनसाध्या,** ( याज्ञिकानां ) । **तत्र परपीडानुग्रहद्वारेणैव कर्माशयप्रचयः । शुक्ला तपःस्वाध्यायध्यानवताम् । सा हि केवले मनस्यायत्तत्वादबहिःसाधनाधीना न परान् पीडयित्वा भवति । अशुक्लाकृष्णा संन्यासिनां क्षीणक्लेशानां चरमदेहानामिति । तत्राशुक्लं योगिन एव फलसंन्यासादकृष्णं चानुपादानात् । इतरेषां तु भूतानां पूर्वमेव त्रिविधमिति"** इति च तत्रत्यं वैयासिकं भाष्यम् । तस्माद् युक्तमिह तस्य श्वित्रशब्देनोपादानम् ।

रक्षको धर्मो यज्ञः । न च तस्य बाणा वृष्टितोऽन्ये सम्भवन्ति । स हि यथाशास्त्रमनुष्ठीयमानो वृष्टिं जनयति, वृष्ट्यैव च सर्वस्य प्रजावर्गस्य रक्षां विदधाति । तस्माद् वृष्टिरेव तस्य बाणा इति युक्तं प्रतिपद्यते । तदिदं दृष्ट्वैवाह **"वर्षमिषवः"** इति । वृष्टिर्वर्षम् । वृष्टिजनयितृत्वं च यज्ञस्य सर्वानुभवसिद्धम् । यस्मिन् खलु कर्मणि देवतोद्देशेनाग्नौ स्वाहावौषट्प्रभृतिमन्त्रोच्चारणपूर्वकं हविः प्रक्षिप्यते स यज्ञ इति परिभाष्यते । अग्नौ हविःप्रक्षेपेण धूमादिद्वारा मेघोत्पत्त्या वृष्टिरिति च निश्चितो मार्गः । यत्रैतच्छ्रुतं भवति **"अग्नेर्वै धूमो जायते, धूमादभ्रमभ्राद् वृष्टिः"** (शतप० ५।३।५।१७) इति । स्मृतं च **"अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"** ( मनु० ३।७६ ) इति । श्रुतिस्मृतयश्च नः प्रमाणम् । तस्माद् रक्षकस्य यज्ञस्य वर्षमिषव इति युक्तमुक्तमनुमन्यामहे । तेभ्यो नमः सर्वं पूर्ववद् व्याख्यातं वेदितव्यम् ॥ ११ ॥

**मनसा** परिक्रम्यादर्शि **सम्मुखे**ऽग्रणीत्वं ज्ञानं विद्वांसः, **दक्षिणे** सर्वैश्वर्यं कर्म कर्मिणः, **पृष्ठे** जीवनं प्राणोऽन्नं, **वामे** प्रियदर्शनता वीर्यं ब्रह्मचर्यं, **ध्रुवायां** व्याप्तिराचार्यो ब्रह्मचारिणः, **मूर्ध्नि** वेदवाणी

यज्ञो वृष्टिरिति । नूनमिदमदृष्टपूर्वं दृश्यम् । यद्धि पेक्ष्यते हितसाधनं, तत् सर्वं यथास्थानमवतिष्ठते । न चान्यदतोऽपेक्षणीयं किञ्चिदवशिष्टं लोक्यते यत् प्रार्थनीयं मन्येत । शिष्यते तु केवलमेकं मोक्षसाधनं जगद्गुरोरीश्वरस्य साक्षाद् दर्शनम् । तदेवाधुना प्रार्थयितव्यम् । तदर्थमुपस्थानमन्त्रास्तावदेते प्रस्तूयन्ते । **उपस्थानं** साञ्जलिवन्धं प्रार्थनम् । तत्रायमादिमो मन्त्रः—

{ऋषिः प्रस्कण्वः काण्वः, देवता सूर्य्यः, छन्दोऽनुष्टुप्}

**"उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्य्यमगन्म ज्योतिरुत्तमम्"** ॥ १२ ॥

(ऋ० १।५०।१०)

**वयम्**=उपासका वयम्, **उद्**=विभक्तिलोपश्छान्दसः, उत्कृष्टात्, भोग्यत्वमुत्कृष्टत्वम्, भोग्यात् **तमसः**=प्रकृतेः **परि**=परमुत्तरम्=उत्कृष्टवृत्तेरुच्छब्दात् तरप्, उत्कृष्टतरं, भोक्तृत्वमुत्कृष्टतरत्वम्, भोक्तारं **ज्योतिः**=चैतन्यप्रकाशो ज्योतिष्ट्वम्, ज्ञानं चैतन्यम्, **ज्योतिस्स्वरूपं** जीवात्मानं **पश्यन्तः**=साक्षात्कुर्वन्तो **देवत्रा**="देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्वहुलम्" (अष्टा० ५।४।५६) इति सप्तम्यर्थे त्रा, देवेषु द्युतिमत्सु सूर्य्यप्रभृतिषु प्राकृतेषु, जीवात्मसु चाप्राकृतेषु **देवम्**=अन्तरात्मत्वेन द्योतमानं **सूर्य्यं**=सूरिभिः प्राप्य**मुत्तमम्**=उत्कृष्टवृत्तेरुच्छब्दात् तमप्, साक्षित्वमुत्कृष्टतमत्वम्, अतिशयेनोत्कृष्टं साक्षिभूतं **ज्योतिः**=ज्योतीरूपं जगद्गुरुं परब्रह्म परमात्मान**मगन्म**="छन्दसि लुङ्लङ्लिटः" (अष्टा० ३।४।६) इति प्रार्थनायां लङ्, शपो लोपश्छान्दसः, **"म्वोश्च"** (अष्टा० ८।२।६५) इति धातोर्मकारस्य नकारः, प्राप्नवाम–प्राप्नुयाम, प्राप्तिरनुभवः साक्षात्कारो दर्शनम्, पश्येमेत्यर्थः ।

**त्रयः** खलु मुख्याः पदार्थाः प्रकृतिर्जीवात्मा परमात्मा चेति । तत्र प्रकृतिरिह तमःशब्देन प्रतिपाद्यते । चैतन्यप्रकाशाभावात् । चैतन्यप्रकाशो हि चेतनधर्मो न जडधर्मः । जडा च प्रकृतिरिति न स

तत्र कर्हिचिद् वोभूयते । तदभावे च युज्यते तस्यास्तमःशब्देन प्रतिपादनम् । श्रुत्यन्तरेऽपि च चैतन्यप्रकाशाभावनिबन्धनस्तत्र तमःशब्दः प्रयुज्यमानो निरीक्ष्यते **"तम आसीत् तमसा गूढमग्रे"** (ऋ० १०।१२९।३) इति । **"आदित्यवर्णं तमसः परस्तात्"** (यजु० ३१।१८) इति च । न च तमःस्वरूपा भवन्त्यपि तत्रभवती भगवती प्रकृतिः कर्हिचिदनुपादेया भवितुमर्हति । भोग्यत्वात् । यथा हि लोके खलु जाततनूः सीमन्तिनी भोक्तॄणां भोगाय नानारूपं बिभ्रती भोग्या सञ्जायते तथा प्रकृतिरपि भोक्तॄणां भोगाय नानाविकारमनुभवन्ती भोग्या सम्पद्यते। भोग्यं च सर्वदा सर्वत्र भोक्तृभिरुपादीयते न जातु परित्यज्यते । भोक्तृत्वस्य भोग्यनिबन्धनत्वात् । भोग्यनिबन्धनं हि भोक्तृत्वम् । न च तद् भोग्याभावे कथञ्चिदवस्थातुमर्हति । नहि भोग्यं न विद्यते भोक्ता चास्तीति सङ्गच्छते । यस्य किलावस्थानं यन्निबन्धनं, तेन तदुपादानमेवोचितं न हानम् । जाततनूः सीमन्तिनी च भोग्या सती भोक्त्र्यपि वर्तते, सा यथा कामुकाय भर्त्रे भोगं कामयते तथाऽऽत्मनेऽप्यभिलषते । न चात्मार्थे भोगमभिलषमाणा सा परमार्थतो भोग्या मन्तुमुत्सह्यते । विपरीता चैतस्याः सर्वथा प्रकृतिः । सा हि सर्वदा भोक्त्रर्थमेव सर्वं भोगमर्थयते, तद्भोगार्थमेव चानिशं नानारूपं परिष्कुरुते, न च स्वप्नेऽपि स्वार्थं भोगं काङ्क्षते । अतः सा परमार्थतो भोग्या न जाततनूसीमन्तिनीवद् भोक्त्रीवेषेणाच्छन्ना । तदिदं भोग्यत्वमेवात्रोत्कृष्टत्वादुच्छब्देनाभिधीयते । तथा चोत्सहितस्य तमसो भोग्या सपरिवारा प्रकृतिरर्थो निर्बाधः ।

जीवात्मानमिह पूर्वो ज्योतिश्शब्दोऽभिधत्ते । स च भोग्यायाः सपरिवारायाः प्रकृतेः परोऽन्तरो भोक्तृत्वादिति परिशब्देनोच्यते । तस्य भोक्तृत्वं च विशेषणेनोत्तरशब्देन । यद्यपि ज्योतिश्शब्दो जीवात्मनि परमात्मनि च साधारणः प्रयुज्यते **"योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिःपुरुषः"** (बृहदा० ४।३।७) इत्येवञ्जातीयको जीवात्मनि, **"ध्रुवं ज्योतिर्निहितं दृशये कम्"** (ऋ० ६।९।५) **"तच्छुभ्रं ज्योतिषां ज्योतिः"** (मुण्डको० २।२९) इत्येव-

ज्ञातीयकश्च परमात्मनि, तथापि विशेषणाभ्यामुत्तरोत्तमाभ्यां पूर्वो ज्योतिश्शब्दो जीवात्मगोचरःपरश्च परमात्मगोचरः प्रयुक्त इति स्फुटं विज्ञायते । अस्ति तावत् सपरिवारायाः प्रकृतेर्जीवात्मनश्चोत्तमः परमात्मेति सार्वत्रिको राद्धान्तः, **"ये अग्नयः पाञ्चजन्या अस्यां पृथिव्यामधि । तेषामसि त्वमुत्तमः प्र णो जीवातवे सुव"** (यजु० १८।६७) इति श्रुतेः । **पाञ्चजन्याः**=पञ्चजना मनुष्याः, तत्रात्मत्वेन वर्तमानाः **अग्नयः**=सर्वेषामग्रण्यो जाठराग्निमन्तो वा जीवात्मान इत्यभिप्रायः । मनुष्या मनुष्यदेहाः, स्वार्थे वा तद्धितः । **"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः"** (गी० १५।१८) इति च स्मृतेः । तत्र सपरिवारा प्रकृतिस्तमश्शब्देनावाचि, परमात्मा च परेण ज्योतिश्शब्देन वक्ष्यते । शिष्यते केवलं जीवात्मेति स एवात्र पूर्वज्योतिश्शब्द इति सुखेन विज्ञातुमीश्यते । चैतन्यं ज्योतिः । तदात्मको जीवात्मा भोग्यायाः सपरिवारायाः प्रकृतेः परो भवितुमर्हति । भोक्तृत्वात् । भोक्ता हि जीवात्मा । **"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः"** (कठो० ३।८) इति श्रुतेः । भोक्त्रर्थं च सर्वं भोग्यम् । **"तदर्थ एव दृश्यस्यात्मा"** (योग० २।२१) इति स्मृतेः । यदर्थं सर्वं भोग्यं स सर्वस्माद् भोग्यादर्थजातात्पर इति निश्चितम् । परत्वमिह सूक्ष्मत्वम् । उदा भोग्या सपरिवारा प्रकृतिराख्यायते, ततोऽतिशयं द्योतयता तरपा च भोक्ता जीवात्मेति वहु स्पष्टं न विवरणान्तरमपेक्षते ।

प्रकृतिजीवात्मभ्यामुत्तमः परमात्मा । यत्कारणं स साक्षात् पश्यत्येव न भोग्यया प्रकृत्या कदाचिदासज्यते, न वा भोक्त्रा जीवात्मना जातुचिदालिप्यते । तदिदं साक्षाद्द्रष्टृत्वमेव साक्षित्वं भगवतस्तस्यात्र तमपा प्रत्याख्यते । भोग्यत्वं प्रकृतेर्भोक्तृत्वं जीवात्मनः, साक्षित्वं च परमात्मनः साक्षाद् भगवति वेदे समाम्नायते **"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति"** (ऋ० १।१६४।२०) इति । **पर्णं** पक्षः, ते सुष्ठुनी

शोभने विद्येते यस्य, स पक्षिविशेषः सुपर्णः, तत्सामान्याज्जीवात्मा परमात्मा चापि सुपर्णाविहोपन्यस्येते। तयोर्ज्ञानशक्तिर्दक्षिणः पक्षः, क्रियाशक्तिरुत्तरः पक्षः। यथा हि लोके खलु कोऽपि सुपर्णो नान्तरेण दक्षिणोत्तरपक्षाभ्यामात्मनीनां गगनोड्डयनलक्षणां क्रियामभिनिर्वर्तयितुं पारयते, तथा जीवात्मपरमात्मानावपि ज्ञानक्रियाशक्तिलक्षणाभ्यां दक्षिणोत्तरपक्षाभ्यामन्तरेण नात्मनीनां जगन्निर्वहणलक्षणां क्रियामभिनिर्वर्तयितुं शक्नुतः। तौ चैतौ द्वा="सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः" (अष्टा० ७।१।३९) इति द्विवचनौकारस्याकारः, अग्रेऽप्येवम्, द्वौ नैकौ, नैकात्मानाविति यावत्, अनेनैकात्मवादो व्युदस्यते। **सयुजा**=सयुजौ समानयोगौ, योगः सम्बन्धः, स्वसत्तासमानसत्ताकसम्बन्धौ सदातनसम्बन्धकाविति यावत्। नियम्यः खलु शरीराध्यक्षो जीवात्मा, तस्य परमात्मना नियामकश्च जगद्गुरुः परमात्मा, तस्य जीवात्मना नियम्यनियामकभावलक्षणः सम्बन्धः सदातनः। सम्बन्धिनोः सदातनत्वे तत्सम्बन्धस्यापि सदातनत्वौचित्यात्। न तयोरागन्तुकः सम्बन्धः किन्तु सांसिद्धिक इति च तदभिप्रायः। अनेन हि जीवात्मपरमात्मनोरौपाधिको भेदो न पारमार्थिक इति मतं निराक्रियते। तस्यौपाधिकत्वे तादृक्षसम्बन्धानुपपत्तेः। अयमेव सम्बन्धः स्वस्वामिभाव इति समाख्यायते। **सखाया**=सखायौ समानख्यानौ, चैतन्यलक्षणः प्रकाशः ख्यानं, ज्योतिरिति तत्पर्य्यायः। तदनयोः समानं विद्यते। यथा हि परमात्मा चेतनस्तथा जीवात्माऽपि चेतनः। चैतन्यमुभयत्राविशिष्टम्। अनेन जीवात्मपरमात्मनोः सर्वथा वैशिष्ट्यं पराणुद्यते। चैतन्येनावैशिष्ट्यं तयोर्नानन्दत्वेनेत्येतदपि ध्वन्यतेऽनेनेति द्रष्टव्यम्। **समानम्**=एकम्। **वृक्षं**=यो वृश्च्यते छिद्यते भिद्यते स वृक्षस्तम्। व्यष्टौ तेन देह उच्यते। तस्य च्छेदो भेदश्च प्रत्यक्षः। अत्र तत्स्थं हृदयं लक्ष्यते। समष्टौ च प्रकृतिः। सा हि विकारजातमनुपतन्ती तदुच्छेदेनोच्छिद्यते तद्भेदेन च भिद्यत इति युक्तं तस्या अपि वृक्षत्वम्। **परिषस्वजाते**=व्यत्ययेन लटः स्थाने लिट्प्रयोगः, परिष्वजाते परिषंजतः, आश्रयतः। प्रकृतिपक्षे भोग्यत्वेन जीवात्मा तमाश्रयति

नियम्यत्वेन च परमात्मेति विवेकः । **तयोः**=जीवात्मपरमात्मनो-**रन्यः**=जीवात्मा **स्वादु**=तदेतदुपलक्षणं, स्वाद्वस्वादु **पिप्पलं**=शुक्ला-शुक्लकर्मजन्यं सुखदुःखात्मकं फल**मत्ति**=भुङ्क्ते । यस्य यदुपार्जितं तत् तस्य स्वादु नापरस्येति स्वादुग्रहणेन सूच्यते, स्वादूकृत्य वा स्वं स्वं कर्म-फलं प्रत्येकमुपभोक्तव्यमित्यभिप्रायः । **अन्यः**=परमात्माऽ**नश्नन्**=पि-प्पलमभुञ्जानोऽ**भिचाकशीति**=साक्षित्वेन प्रकाशयतीति मन्त्रार्थः । तथा श्रुत्यन्तरेऽपि च "**साक्षी चेता केवलो निर्गुणश्च**" ( श्वेता० ६।११ ) इति । यथाऽस्त्युत्तमत्वात् साक्षी जगद्गुरुः परमात्मा तथा सूरिभिः प्राप्यत्वादस्ति सूर्य्यः । सूरयः खलु मोक्षावस्थायामेनं प्राप्नुवन्ति यथा समाधौ सुषुप्तौ च । यत्रैतच्छ्रुतं भवति "**तस्यैष आत्मा विशते ब्रह्मधाम**" ( मुण्डको० ३।२।४ ) "**यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान् नाम-रूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम्**" ( मुण्डको० ३।२।८ ) "**ब्रह्मविदाप्नोति परम्**" ( तै० २।१ ) इति । द्योत-नाद् देवाः प्रकृतितद्विकाराः सूर्य्यप्रभृतयो जीवात्मानश्चोच्यन्ते । तत्रा-न्तरात्मत्वेन द्योतनाच्चासौ देवेषु देवः परमात्मा । तस्य सर्वान्तरात्मत्वं च श्रूयते वेदोपनिषच्छ्रुतिषु "**सूर्य्य आत्मा जगतस्तस्थुषश्च**" ( ऋ० १।११५।१ ) "**तदन्तरस्य सर्वस्य**" ( यजु० ४०।५ ) "**स्कम्भ इदं सर्वमात्मन्वद्**" ( अथर्व० १०।८।२ ) "**एको देवः सर्व-भूतान्तरात्मा**" ( कठो० ५।१२ ) "**सर्वस्मादन्तरतरं यदय-मात्मा**" ( बृहदा० १।४।८ ) इत्येवञ्जातीयकासु । तेषामेषां प्रकृति-जीवात्मपरमात्मनां भोग्यत्वात् प्रकृतिः स्थूला जीवात्मनः परमात्मनश्च बाह्यमवतिष्ठते, जीवात्मा च भोक्तृत्वात् सूक्ष्मस्तस्या आभ्यन्तरे वर्तते, जगद्गुरुः परमात्मा च तदन्तरात्मत्वात् सूक्ष्मतरस्तस्याप्यन्तरं विरा-राज्यते । बहिरन्तर्वर्तमानेषु स्थूलसूक्ष्मसूक्ष्मतरेषु च प्रकृतिजीवात्म-परमात्मसु पूर्वं बहिर्वर्तमाना स्थूला प्रकृतिर्दर्शनमर्हति, तदनु तदन्तर्वर्त-मानः सूक्ष्मो जीवात्मा, तदनु च तस्याप्याभ्यन्तरे वर्तमानः सूक्ष्मतरो

जगद्गुरुः परमात्मा । नहि यावद् बहिर्वर्तमानं स्थूलं वस्तु न दृश्यते, तावत् तदन्तरे वर्तमानं सूक्ष्मं तस्याप्याभ्यन्तरे वर्तमानं सूक्ष्मतरं च कर्हिचिद् दर्शनायावकल्पते । नूनं परमात्मदर्शने साधनं पूर्वमशेषविशेषतः प्रकृति-दर्शनं, तदनु च जीवात्मदर्शनम् । अत एवेह **"उत्तमसस्परि वर्त-मानमुत्तरं ज्योतिः पश्यन्तो वयमुत्तमं ज्योतिः सूर्य्यं देवं पश्येम"** इति प्रार्थ्यते । युक्तञ्चैतत् प्रार्थनम् । यत्कारणं सपरिवारां प्रकृतिं दृष्ट्वैव जीवात्मा, तं च दृष्ट्वैव तदन्तरात्मा परमात्मा द्रष्टुं शक्यते नान्यथेति वैदिको राद्धान्तः । सोऽयमनेन समर्थ्यतेतराम् । समार्थतामहि च वेदान्तसूत्रवैदिकवृत्त्यपरनामधेये **वेदान्तसूत्रवैदिकभाष्ये**ऽपि विस्तरेणैतं राद्धान्तमिति विस्तराभिलापुकास्तत एव विदाङ्कुर्वन्तु ॥ १२ ॥

अथोपस्थाने द्वितीयो मन्त्रः—

{ऋषिः प्रस्कण्वः काण्वः, देवता सूर्य्यः, छन्दो गायत्री}

**"उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्य्यम्"** ॥ १३ ॥ (ऋ० १।५०।१)

**केतवः**=प्रज्ञा केतुः **"केतः केतुश्चेतश्चित्तं क्रतुरसुर्धीः शचीर्माया वयुनमभिख्येत्येकादश प्रज्ञानामानि"** (निघण्टु० ३।९) इति निघण्टौ प्रज्ञानामसु पाठात्, प्रकृष्टं ज्ञानं प्रज्ञा=दर्शनं, तेनेह तदभिलाषुका उपासका लक्ष्यन्ते, उपासकाः **त्यं**=तं प्रसिद्धं जगज्जन्मादिकारणं **जातवेदसं**=जातमात्रस्य वेत्तारं सर्वज्ञं **देवम्**=अन्तरात्मत्वेन सर्वेषु पदार्थेषु द्योतमानं **सूर्य्यं**=सूरिभिः प्राप्यं भगवन्तं परमात्मानम्, **उ**=निश्चयेन, **उद्वहन्ति**=उत्कर्षं प्रापयन्ति, प्रार्थनैः प्रार्थितस्योत्कर्षः प्रसिद्धः । प्रार्थयन्तीति तदभिप्रायः । **विश्वाय**=षष्ठ्यर्थे चतुर्थी, विश्वाधारत्वात् **"सर्वं समाप्नोषि ततोऽसि सर्वः"** (गी० ११।४०) इति स्मृतेर्वा विश्वोऽत्र परमात्मा, तस्य विश्वस्य परमात्मनो **दृशे**="दृशे विख्ये च" (अष्टा० ३।४।११) इति तुमर्थे निपातः, दर्शनायेत्यर्थः ।

पृथक् पृथगुपासनाकर्मानुष्ठानेन प्रत्येकं यावत् फलं समवाप्यते, ततः

सहस्रशोऽधिकमनेकैः सम्भूयानुष्ठानेन सम्प्राप्यते । अवाच्यः खलु सर्वथा सङ्गत्योपासीनानामुपासनामाहात्म्यातिशयः । अत एवानुज्ञायते भगवति वेदे **"सहस्रं साकमर्चत परिष्टोभत विंशतिः"** (ऋ०१।८०।९) इति । तदिदमिह **केतव** इति बहुवचननिर्देशेनावद्योत्यते । सर्वदा सम्भूय बहुभिः सन्ध्योपासनकर्मानुष्ठातव्यमिति गूढाभिसन्धिः ॥ १३ ॥

अथोपस्थाने तृतीयो मन्त्रः—

{ ऋषिः कुत्स आङ्गिरसः, देवता सूर्य्यः, छन्दस्त्रिष्टुप् }

**"चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य्य आत्मा जगतस्तस्थुषश्च" ॥ १४ ॥** (ऋ० १।११५।१)

**देवानां**=देवा उपासकाः, तेषां **चित्रं**=चायनीयं पूजनीयम्, **अनीकम्**="अनिहृषिभ्यां किच्च" (३०४।१७) इत्यनितेरीकन्, जीवनम्, अनित्यनेनेति तद्व्युत्पत्तेः, बलं वा, बलमुपास्यमेवोपासकानां नान्यदिति सम्प्रतिपत्तेः, **मित्रस्य**=द्युस्थानः सूर्य्यो मित्रः, मीतेः प्रमीतेस्त्रायते सर्वं लोकमिति तद्व्युत्पत्तेः, तस्य, **वरुणस्य**=अन्तरिक्षस्थानो वायुरत्र वरुणः, वृणोति वारयति मेघजालेनान्तरिक्षमिति तद्व्युत्पत्तेः, तस्य, **अग्नेः**=पृथिवीस्थानो ज्वलनोऽग्निः, तस्य **चक्षुः**=स्वस्वकार्य्यदर्शकं ब्रह्म, **उदगात्**="छन्दसि लुङ्लङ्लिटः" (अष्टा० ३।४।६) इति प्रार्थनायां लुङ्, उद्गच्छतु, उदयं प्राप्नोतु—उपासकानामस्माकं हृदय इति शेषः । प्रकृत्यावरणापाकरणमुदयः । अन्यत्र सतोऽत्र हृदये कथमुदयः ? इति शङ्कां निराकुर्वन्नाह—**द्यावापृथिवी**=द्युलोकं पृथिवीलोकमन्त**रिक्षं**=मध्यमं लोकं च**आप्राः**=प्रातेर्लेडर्थे लङ्, आप्राति समन्ततो व्याप्य तिष्ठति । न च लोकत्रयं व्याप्य तिष्ठतोऽस्त्युपासकानां हृदये कथञ्चिदुदयासम्भव इति शङ्काव्युदासः । **ननु** व्यापकं सदपि भवेदाकाशवत् संयोगिमात्रम् ? नेत्याह—**जगतः**=जङ्गमस्य **तस्थुषश्च**=स्थावरस्य च सर्वस्य चिदचिदात्मकस्यार्थजातस्य**आत्मा**=अन्तरात्मा । **ननु** हृदये तदु-

दयेन किं स्यादप्राप्यत्वात्? नेत्याह—सूर्य्यः=सूरिभिः प्राप्तदर्शनैर्विद्वद्भिः प्राप्य इत्यर्थः।

यद् ब्रह्म देवानामुपासकानां पूजनीयं जीवनं बलं वा, मित्रस्य वरुणस्याग्नेश्च स्वस्वकर्तव्यकर्मणो दर्शकं, द्युलोकं पृथिवीलोकमन्तरिक्षलोकं च समन्ततो व्याप्यावतिष्ठते, जगतस्तस्थुषश्चान्तरात्मा सूर्य्यः, तन्नो दर्शनार्थं हृदये प्रकाशतामिति मन्त्राभ्युच्चयार्थः ॥ १४ ॥

अथोपस्थाने चतुर्थो मन्त्रः—

{ऋषिर्दध्यङ्ङाथर्वणः, देवता सूर्यः, छन्दस्त्रिष्टुप्}

**"तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्, पश्येम शरदः शतं, जीवेम शरदः शतं, शृणुयाम शरदः शतं, प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं, भूयश्च शरदः शतात्" ॥ १५ ॥** (यजु० ३६।२४)

तत् पुरस्तादुच्चरदित्यन्वयः। **चक्षुः**=जगद्व्यापारनिर्वाहकाणां सूर्य्याग्निलाग्नीनां कर्तव्यस्य कर्मणो दर्शकं **देवहितं**=देवा उपासकाः, तेभ्यो हितं प्रियं, तेषां हितकरं वा, **शुक्रं**=शुक्लं निर्मलं निष्पापं शुद्धं **तत्**=जगज्जन्मादिकारणं ब्रह्म **पुरस्तात्**=सम्मुखे यथा स्यात् तथा **उच्चरत्**="इतश्च लोपः परस्मैपदेषु" (अष्टा० ३।४।९७) इतीकारलोपः, **उच्चरति**—उदयं गच्छति—स्वां तनूं विवृणोति। सम्मुखे स्थितमिव दर्शनं प्रयच्छतीत्यभिप्रायः। **शरदः**=वर्षाणि **शतम्**=एकशतम्, अत्यन्तसंयोगे द्वितीया, शतवर्षाणि **पश्येम**=प्रार्थनायां लिङ्, लोचेमहि, भगवतस्तस्य प्रसादेन शतवर्षपर्य्यन्तं वयमव्याहतचक्षुरिन्द्रियाः सम्पद्येमहि, **शरदः शतं**=शतवर्षाणि **जीवेम**=प्राण्याम, शतवर्षपर्य्यन्तमपराधीनजीवना विद्येमहि, **शरदः शतं**=शतवर्षाणि **शृणुयाम**=कर्णयेम, शतवर्षपर्य्यन्तं सुश्रुतश्रोत्रेन्द्रिया वर्तेमहि, **शरदः शतं**=शतवर्षाणि **प्रब्रवाम**=अध्यापयेम—शतवर्षपर्य्यन्तमस्खलितवागिन्द्रिया अवतिष्ठेमहि, **शरदः शतं**=शतवर्षाण्य**दीनाः**=दैन्यरहिताः **स्याम**=भवेम, यावज्जीवं कस्याप्यग्रे

दैन्यं वचो न व्याकुर्वीमहि, **शरदः शतात्**=शतवर्षोपरिष्टाद् **भूयश्च**= अधिकं कालं च पश्येम जीवेम शृणुयाम प्रब्रवामादीनाः स्यामेत्यर्थः ।

यत् खलु प्रार्थ्यते, तत् सम्पन्नमेवेति दृढः सङ्कल्पः प्रार्थयितुस्तावदावश्यकः । यत्कारणं सति तस्मिन्नचिरेण तत् सम्पद्यते, प्रार्थयिता च प्रार्थनवेलायामेवैनत्सम्पद्यमानं निरीक्षते । अत एवाह भगवती श्रुतिः **"क्रतुमयोऽयं पुरुषः"** (शतपथ० १०।६।३।१) इति । **"स क्रतुं कुर्वीत"** (छान्दो० ३।१४।१) इति च । **क्रतुः**=दृढः सङ्कल्पः । यं किलाङ्गलाः **"विल पावरम्"** इति सङ्गिरन्ते । अतुलप्रभावश्चायमिति न तिरोहितं प्रज्ञावतामन्तार्धियाम् । प्रार्थ्यते चेदानीं जगतः पितृचरणस्य भगवतो ब्रह्मणः साक्षाद् दर्शनम् । तच्च भगवतस्तस्यानुग्रहेणोपासनकर्मपरिपाकाद् यथावेलं सम्पत्स्यते । सम्पत्स्यमानं च तत् सङ्कल्पदार्ढ्येण प्रार्थनवेलायामेव सम्पद्यमानं निरीक्षमाणो हर्षातिशयादाह **"तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्"** इति । ब्रह्मदर्शनसम्पत्तेः फलममृतत्वम् **"य इत्तद्विदुस्ते अमृतत्वमानशुः"** (ऋ० १।१६४।२३) इति मन्त्रवर्णात् । अमृतत्वं च द्विविधम्—ऐहिकमामुष्मिकं च । तत्रामुष्मिकं मोक्षाख्यं प्रारब्धभोगावसाने निर्वर्तिष्यते । यत्रैतच्छ्रुतं भवति **"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये"** (छान्दो० ६।१४।२) इति । स्मृतं च **"भोगेन त्वितरे क्षपयित्वा सम्पद्यते"** (वेदान्तसू० ४।१।१९) इति । यत्पुनरैहिकं तच्छरदः शताद् भूयः स्वस्वकार्य्यनिर्वर्तनक्षमैश्चक्षुरादिभिरिन्द्रियैः सर्वथा स्वस्थं जीवनम् **"एतद् वाव मनुष्यस्यामृतत्वं यत् सर्वमायुरेति वसीयान् भवति"** (ताण्डवब्रा० २२।१२।२) इत्यादिश्रुतिभ्यः । **वसीयान्**=स्वस्थः । श्रेष्ठ इति सायणः । भवति= आत्मनाऽऽत्मानं बिभर्ति । तदिदं स्वस्थजीवनमेवान्ते प्रार्थनाव्याजेनोद्भाव्यते **"पश्येम शरदः शतं, जीवेम शरदः शतं, शृणुयाम शरदः शतं, प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्"** इति । सर्वदा सर्वत्र बहुभिर्मिलितैः

प्रार्थनं विधातव्यं नैकैकेन मनुपुत्रेण सत्यवकाशे यावज्जीवमिति बहुवचनप्रयोगः। तैत्तिरीयारण्यके चतुर्थे काण्डेऽप्येष मन्त्रः समाम्नायते। तत्र चास्यैवं पाठः **"तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं, जीवेम शरदः शतं, नन्दाम शरदः शतं, मोदाम शरदः शतं, भवाम शरदः शतं, शृणवाम शरदः शतं, प्रब्रवाम शरदः शतमजीताः स्याम शरदः शतं, ज्योक् च सूर्य्यं दृशे"** (तैत्ति० आ० ४।४२) इति। **नन्दाम**=पुत्रपौत्रधनादिभिः समृध्येम, **मोदाम**=हृष्येम, **भवाम**=आत्मानमात्मना विभृयाम, **शृणवाम**=शृणुयाम, **अजीताः**=अजिताः, **ज्योक्**=चिरकालं, **दृशे**=द्रष्टुमाशास्महे इति शेषः। **"तच्चक्षुर्देवहितं शुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतम्"** (ऋ० ७।६६।१६) इति च बह्वृचसंहितायां मन्त्रपाठः॥ १५॥

उपस्थानं पर्य्यवसितम्। इदानीं साक्षाद्ब्रह्मदर्शहेतुनोपासनकर्मणा प्रवर्तितव्यम्। तच्च द्वेधा प्रवर्तते साक्षात् केनचिद् द्वारेण च। यत्किलोपास्ये भगवति ब्रह्मणि द्वारं किञ्चिदनपेक्ष्य व्यापारान्तरशून्यस्य चेतसो गाढं निवेशनं तैलधारावदविच्छिन्नैकाकारवृत्तिसन्तानोपजननं तत् साक्षात्प्रवृत्तमित्याख्यायते। यत् पुनरोमा वा गायत्रीमन्त्रेण वाऽन्येन वा केनचिद् बाह्याध्यात्मिकेन योगशास्त्रनिर्दिष्टेनोपायेन भावनातिशयात् पुरस्तादुपस्थितोपमे भगवति तस्मिन् प्रेमभरनम्रीभूतस्य चेतसो निवेशनं तत् केनचिद् द्वारेण प्रवृत्तमिति व्याख्यायते। सन्ध्योपासनकर्म च नियमतो गायत्रीमन्त्रमुखेन सततं प्रवर्तते। यत्कारणं सोऽस्ति गुरुमन्त्रः। गुरुर्ह्येनं सर्वतः पूर्वमुपनयनवेलायामुपदिशति। यत्रैतच्छ्रुतं भवति **"अथास्मै सावित्रीमन्वाह।६। गायत्रीमेव सावित्रीमनुब्रूयात्।१३। तां वै पच्छोऽन्वाह, अथार्धर्चशः, अथ कृत्स्नाम्"** (शतपथ० ११।५।४।६—१३—१५) इति। सन्ध्योपासनकर्मणि चोपनीतस्याधिकारो नानुपनीतस्येति राद्धान्तः। जगद्गुरौ भगवति ब्रह्मणि वा मनःप्रवेशनिमित्तत्वात् स्यादयं गुरुमन्त्रः। सूक्ष्मतमं हि जगद्गुरुर्ब्रह्म। न तत्र तावन्मनःप्रवेशं लभते प्राथमिकानां

बालबुद्धीनामुपासकानां, यावत् पूर्वं केनचित् तत्प्रतिपादकशब्दविशेषेण न भाव्यते । यत्कारणं स प्राथमिकानामुपासकानां कृतेऽभ्युपगम्यते तत्रासाधारणं निमित्तम् । यथा खलु शाटके सूत्रप्रवेशे सूची, लक्ष्ये वा शरप्रवेशे धनुर्निमित्ततां भजते, तथा जगद्गुरौ ब्रह्मणि प्रथमं मनःप्रवेशे तत्प्रतिपादकः शब्दविशेषोऽपि हेतुतां लभते । नहि प्रतिपादकशब्दविशेषं हित्वा कश्चिदत्यन्तसूक्ष्मे प्रतिपाद्येऽर्थे सहसा मनःप्रवेष्टुमीष्टे । तत्प्रतिपादकः शब्दविशेषो यथा प्रणवः समाश्रीयते, तथा गायत्रीमन्त्रोऽपि समाद्रियते । अतएव छन्दोगा ब्रह्मणि मनःप्रवेशनिमित्तत्वाद् गायत्र्या ब्रह्मरूपतामामनन्ति **"ब्रह्म हि गायत्री"** (ताण्ड्यब्रा० ११।११।९) इति । निमित्तं द्वारं चेत्येकोऽर्थः । तस्यैतस्य गुरुमन्त्रापरपर्य्यायस्य महामन्त्रस्य गायत्रीमन्त्रस्य चैष प्रणवव्याहृतिसहितः पाठः—

{ऋषिर्विश्वामित्रः, देवता सविता, छन्दो गायत्री}

**ओम्-भूर्भुवःस्वः "तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात्" ॥ १६ ॥**

(ऋ० ३।६२।१०) (यजु० ३६।३)

व्याहृतित्रयसहितस्योमोऽर्थः पूर्ववत् । तदनु गायत्रीमन्त्रार्थारम्भः— **तत्**="सुपां सुलुक्०" (अष्टा० ७।१।३९) इति षष्ठ्या लुक्, तस्य सर्वश्रुतिस्मृतिप्रसिद्धस्य **देवस्य**=चिदचिदात्मकेषु विश्वेषु पदार्थेष्वन्तरात्मत्वेन द्योतमानस्य प्रकाशमानस्य **सवितुः**=जगत्प्रसवितुः, उत्पादः प्रसवः, तेन स्थितिप्रलयौ लक्ष्येते, सर्वजगदुत्पत्तिस्थितिप्रलयकारणस्य भगवतो जगद्गुरोरीश्वरस्य **वरेण्यं**=वृञ एण्यः, वरणीयम्—आनन्दमयत्वात् सर्वैरुपास्यतया ज्ञेयतया च सम्भजनीयं, गुणतः कर्मतः स्वरूपतो वा श्रेष्ठं, **भर्गः**=सान्तमेतत्, जगद्दुःखमूलस्य पापस्य भर्जनसमर्थं, भर्जनं नाशः, तत्र पर्य्यासं, **"वीर्य्यं वै भर्गः"** (शतपथ० ५।४।५।१) इति श्रुतेः, तेजोमयं रूपं **धीमहि**=लडर्थे लिङ्, आत्मनेपदं सम्प्रसारणं च छान्दसम्, व्यत्ययेन शपो लुक्, ध्यायामः, ध्यानमत्रोपासनम्, उपास्महे, **यः**=यो देवः सविता **नः**=अस्माकमुपासकानां **धियः**=द्वितीयाबहु-

वचनम्, अखिलकार्य्यकर्त्रीर्बुद्धीः **प्रचोदयात्**=प्रार्थनायां लेट्, प्रकर्षेण प्रेरयेत्, सुकर्मानुष्ठानप्रवणा दुष्कर्मानुष्ठानविमुखाश्चास्मद्बुद्धीर्विदध्यात्, दुष्कर्मानुष्ठानाभिरुचिहेतुपाप्ममलनिवारणेनास्माकीनाः धीर्निर्मलीकुर्य्यादित्यर्थः।

तस्य श्रुतिस्मृतिप्रमितस्य जगज्जन्मादिकारणस्यान्तरात्मत्वेन सर्वत्र चिदचिदात्मकेषु पदार्थेषु द्योतमानस्यान्तर्य्यामिणो भगवतो जगद्गुरोरीश्वरस्यानन्दमयं तेजोमयं सर्वतः श्रेष्ठं निर्मलं शुद्धं रूपमुपास्महे, योऽस्माकं बुद्धीः पाप्ममलमपमृज्य निर्मलीकुर्य्यात्। येन वयं वेदविहितानि सर्वाणि कर्माणि यथाकालं निष्प्रत्यूहमनुतिष्ठन्तो यावज्जीवमैहिकमभ्युदयसुखं शरीरपाते चामुष्मिकं मोक्षसुखं नित्यमुपभुञ्जीमहि।

जगद्गुरुरीश्वरो हि परब्रह्मपरमात्मा जगदुत्पत्त्यादिकारणत्वादिह सवितेति निर्दिश्यते। सूते प्रसूते विश्वं जगदिति तद्व्युत्पत्तेः। सूतिरुत्पत्तिः। तया स्थितिसंहृती लक्ष्येते। नियतसम्बन्धात्। अस्ति तावत् सूत्या स्थितिसंहृत्योर्नियतः सम्बन्धः। यत्कारणं सत्यामेव सूत्यां स्थितिसंहृती प्रवर्तेते। नहि न सूयते, स्थीयते संह्रियते चेति सम्भवति। तथा च येनेदं सर्वं जगत् सूयते, सूतं स्थीयते, स्थितं चान्ते संह्रियते, स जगद्गुरुरीश्वरः सवितेति निर्गलितार्थः। परब्रह्मपरमात्मनो जगद्गुरोरीश्वरस्य जगदुत्पत्तिस्थितिप्रलयकारणत्वं च लोकतः श्रुतिस्मृतिभ्यां च स्फुटं प्रमेमीयते। लोकस्तावत् पश्यति दृश्यमानेयं विविधा जगद्रचना न जात्वचेतनकर्तृका कर्हिचिदुपपत्तुमर्हति। यत्कारणमचेतनं न चेतयते किञ्चित्, अचेतयमानस्य च प्रव्यक्ता प्रवृत्त्यनुपपत्तिः। तदनुपपत्त्या च रचनानुपपत्तिः सुतराम्। चेतनाः पुनर्जीवात्मानोऽल्पज्ञाल्पशक्तित्वाभ्यां न तां कथञ्चिद् विधातुमीशते। तस्मादस्ति कश्चित् सर्वज्ञः सर्वशक्तिश्चेतनो जगद्गुरुरीश्वरो येन विविधेयं जगद्रचना विधीयते, विहिता च यथास्थानं स्थीयते, स्थिता चान्ते पूर्ववत् संह्रियते। तदिदं लोकदर्शनं नूनमनेकशः श्रुतिस्मृतयः सुप्रमिमते **"न तं विदाथ य इमा जजान"** (ऋ० १०।८२।७) **"य इमा विश्वा भुवनानि जुह्वद्"** (ऋ० १०।

८।१।१) "एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्" (माण्डूक्यो० ६) "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तद् ब्रह्म" (तैत्तिरीयो० ३।१) "एकैकं जालं बहुधा विकुर्वन्नस्मिन् क्षेत्रे संहरत्येष देवः । भूयः सृष्ट्वा यतयः ! तथेशः सर्वाधिपत्यं कुरुते महात्मा" (श्वेताश्वतरो० ५।३) "जन्माद्यस्य यतः" (वेदान्तसू० १।१।२) "सर्वभूतानि कौन्तेय ! प्रकृतिं यान्ति मामिकाम् । कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्" (गीता० ९।७) इत्याद्याः । जगज्जन्मादिकारणस्य जगद्गुरोरीश्वरस्य चोपासनं सर्वथा घटते नास्ति तत्राघटमानं नाम किञ्चित् । यः खलु सर्वज्ञः सर्वशक्तिर्भवन्नस्ति सर्वस्यास्य जगतः प्रसविता रक्षिता प्रलेता च, सोऽभ्युदयनिःश्रेयसकामैर्वैदिकैः सर्वैः सततमुपासितव्यो जगद्गुरुरीश्वरः । यत्कारणं यस्य सङ्कल्पमात्रेण सर्वमिदं जगत् सूयते रक्ष्यते लीयते च, तस्मिन्नुपास्यमाने किमलभ्यं स्यादत्रभवतामुपासकानां वैदिकशिरोरत्नानां, किं वा भवेदत्रभवद्भ्यस्तेभ्योऽदेयं नाम भगवतस्तस्येति सवितृपदनिर्देशेन ध्वन्यते । क्वासौ जगद्गुरुरीश्वरो वैदिकैः सततमुपासितव्य इति तद्विशेषणदेवपदोपन्यासेन समाधीयते । यः सर्वत्रान्तरात्मत्वेन वर्तमानो द्योत्यते प्रकाशते स देवः । यत्रैतदुदाहृतं भवति "देवो द्योतनात्" (निरुक्त० ७।१५) इति । दीव्यतेर्वा भवेद् द्युतिकर्मणो देवः । तत्र दीव्यति प्रकाशत इति तद्व्युत्पत्तिः । सर्वत्रान्तरात्मत्वेन द्योतमानस्य जगद्गुरोरीश्वरस्य चोपासनास्थानेषु बाह्याध्यात्मिकेषु सूर्य्याक्षिहृदयेषु द्योतमानत्वं सुखेनोपपद्यते । नहि यो बाह्याध्यात्मिकेषु सर्वेषु पदार्थेषु द्योततेऽन्तरात्मा भवन्, स सूर्य्येऽक्षिणि हृदये च न द्योतत इति युज्यते । सन्ध्योपासनकर्मणि च प्रायेण सूर्य्यमण्डलं हृदयं चोभयमुपासनस्थानमुपयुज्यते । सूक्ष्मधियां वैदिकानां च हृदयमेवोपयुक्ततरं तत्स्थानं मन्यामहे । तस्मात् सततं हृदये स जगद्गुरुरीश्वरो वैदिकैः सर्वैरुपासितव्यो नान्यत्रेति देवपदनिर्देशाशयः । यथा सवितृपदेन जगद्गुरोरीश्वरस्योपा-

स्तत्वं तद्विशेषणेन देवपदेन च तदुपासनास्थानं हृदयपुण्डरीकं निर्देदिश्यते तथा वरेण्यपदेन भर्गःपदेन चोपासनार्हमुपास्यस्य भगवतस्तस्य रूपमुपदेदिश्यते। **वरेण्यं**=वरणीयम्। सम्भजनीयमाश्रयणीयमिति च तत्पर्य्यायः। वेव्रीयते च सर्वैः सर्वत्रानन्दमयं सर्वं रूपमिति निश्चितं मतम्। **भर्गः**= भृज्यतेरसुन्, भर्जकं पापानाम्। तेजोमयत्वात्। यथा खलु तेजोमयो वह्निः सान्निध्यं प्राप्तानि काष्ठानि तत्क्षणान्निर्दहति तथा तेजोमयो जगद्गुरुरीश्वरः सांनिध्यं प्राप्तानां तत्रभवतामुपासकानां सर्वाणि पापानि तत्क्षणाद् बाभ्रष्टि। यत्रेदमाम्नातं भवति **"न तमंहो न दुरितं कुतश्चन नारातयस्तितिरुर्न द्वयाविनः। विश्वा इदस्माद् ध्वरसो विबाधसे यं सुगोपा रक्षसि ब्रह्मणस्पते!** (ऋ० २।२३।५) इति। स्मृतं च **"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः"** (गी० १८। ६६) इति। तेजो विज्ञानज्योतिः। तथाच सर्वज्ञसर्वशक्तेर्जगज्जन्मादिहेतोरन्तरात्मत्वेन सर्वत्र द्योतमानस्य तेजोमयस्य विज्ञानमयस्य भगवतः परब्रह्मणो जगद्गुरोरीश्वरस्यानन्दमयं तेजोमयं विज्ञानमयं निर्मलं शुभ्रं शुद्धं यद् रूपं तद् वैदिकानां तत्रभवतामुपासकानां हृदयपुण्डरीके सततमुपासितव्यमिति वरेण्यभर्गःशब्दाभ्यां स्फुटमुपदिष्टं भवति। भगवतस्तस्य तथाविधं रूपं च शोश्रूय्यते श्रुतिस्मृतिषु सर्वत्र **"स्वर्यस्य च केवलम्"** (अथर्व० १०।८।१) **"आनन्दं ब्रह्मणो विद्वान्"** (तैत्तिरीयो० २।३।९) **"आनन्दरूपममृतं यद् विभाति"** (मुण्डको० २।२।७) **"स यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषः, अयमेव स योऽयमात्मेदममृतमिदं ब्रह्म"** (बृहदारण्यको० ३।९।२८) **"विज्ञानमानन्दं ब्रह्म"** (बृहदारण्यको० ३।९।२८) **"प्रज्ञानं ब्रह्म"** (ऐतरेयो० ३।१) **"सत्यं ज्ञानमनन्तं ब्रह्म"** (तैत्तिरीयो० २।१) **"येन सूर्य्यस्तपति तेजसेद्धः"** (तै० ब्रा० ३।१२।९।७) **"तच्छुभ्रं ज्योतिषां ज्योतिः"** (मुण्डको० २।२९) **"तद्देवा ज्योतिषां ज्योतिः"** (बृहदारण्यको० ४।४।१६) **"ते-**

जोऽसि शुक्रममृतम्" (यजु० २२।१) "ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते । ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम्" (गीता० १३।१७) इति । नच जगद्गुरोरीश्वरस्य भगवतस्तस्य तादृक्षमानन्दमयं तेजोमयं विज्ञानमयं निर्मलं शुक्रं शुक्लं शुभ्रं शुद्धं रूपं तावदुपासितुं शक्यते यावदुपासकानां बुद्धिरधिकारसम्पदं न लभते । अधिकारसम्पत्=अधिकारोत्कर्षः । तत्र च वेदविहितकर्मानुष्ठानवदपेक्ष्यते भगवतस्तस्य परमोऽनुग्रहः । तं विना तल्लाभासम्भवात् । सोऽयं तत्परमानुग्रहोऽत्र चरमेण पादेनार्थतः समर्प्यते "धियो यो नः प्रचोदयात्" इति । प्रचोदयात्=सोपसृष्टायाश्चुदेः प्रार्थनायां लेट् । प्रेरणकर्मा चुदिः । न च बुद्धीनां प्रेरणमिह प्रार्थ्यत इति मन्तव्यम् । यत्कारणं परप्रेरिताभिर्बुद्धिभिः कर्मकरणे पुरुषाणां तत्र पारतन्त्र्यं प्रसज्यते, स्वातन्त्र्यं च हीयते । अभ्युपगम्यते च स्वातन्त्र्यम् । तर्हि किमिह प्रार्थ्यते ? निर्मलीकरणं बुद्धीनामिति वदामः । निर्मला भवन्त्यः खलु बुद्धयः सूक्ष्मात्सूक्ष्मेऽप्यर्थे सुखेन प्रवेविश्यन्ते, प्रवेविश्य च यथाविधानं तत्तत्कर्म सम्पादयन्त्योऽचिरेणाभ्युदयाय निःश्रेयसाय चैहिकामुष्मिकफलाय निष्प्रतिबन्धं प्रकल्पन्ते । नूनं निर्मलबुद्धितन्त्रो मनुष्याणां सर्वोऽपि व्यापारः, स्यादुपासनलक्षणोऽसौ, स्याद्वाऽग्निहोत्रादिसाधारणकर्मलक्षणः । बुद्धीनां नैर्मल्यं च दुरितमलनिवृत्त्या सम्पद्यते न प्रकारान्तरेण केनचिदिति सार्वत्रिको राद्धान्तः । दुरितनिवृत्तौ च तीव्रोपायो भगवतो जगद्गुरोरीश्वरस्य परमोऽनुग्रहः । अत एव मन्त्रेषु दुरितनिवृत्तिप्रार्थनं सर्वत्राकर्ण्यते "आशुं दधिक्रां तमु नु ष्टवाम दिवस्पृथिव्या उत चर्किराम । उच्छन्तीर्मामुषसः सूदयन्त्यति विश्वानि दुरितानि पर्षन्" (ऋ० ४।३९।१) "विश्वानि देव! सवितर्दुरितानि परासुव । यद्भद्रं तन्न आ सुव" (ऋ० ५।८२।५) इत्येवञ्जातीयकेषु । आशुं=शीघ्रगामिनं, दधिक्राम्=अभिव्याप्य सर्वस्य धारकम् । दधाति क्रामति च सर्वमसौ

दधिक्राः, तमिति तद्व्युत्पत्तेः । **चर्किराम**=विक्षिपामः स्तुतिमिति शेषः । **विक्षेपो** विस्तारः । सोऽयं भगवतस्तस्य परमोऽनुग्रहोऽत्र चरमेण पादेनार्थतः समर्पितो वेदितव्यः । तथा च सर्वदुरितनिवारणेनाऽस्माकं बुद्धीर्निर्मला विदधीतानुगृह्णन्नस्मानिति तत्पादार्थः पर्य्यवसितः । प्रणवस्य व्याहृतीनां च तिसृणामर्थो व्याख्यायि सविस्तरं पुरस्तात् । **एष** सप्रणवव्याहृतित्रयोपेतो गुरुमन्त्रो महामन्त्रो गायत्रीमन्त्रः सन्ध्योपासनवेलायामर्थज्ञानपूर्वकं मनसा शनैःशनैरुच्चारयितव्यो न्यूनान्न्यूनं त्रिवारमित्युपदेशः । नूनमनेन दीर्घकालनैरन्तर्य्यसत्कारासेवितेन निर्मलायां धियां निर्वृत्ते सर्वाङ्गपूर्णे तावदुपासनकर्मणि द्रागित्येव तत्रभवतोऽस्योपासकस्य निरन्तरं स्फुटतरं स्पष्टतरं साक्षाद् भगवतः परब्रह्मणः परमेश्वरस्य दर्शनमुपजायते । यत्रैतदुदाहृतं भवति **"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्"** ( ऋ० १।२२।२० ) इति । **तत्**=प्रसिद्धं **विष्णोः**=व्यापकस्य परब्रह्मणः परमेश्वरस्य **परमं**=सर्वोत्कृष्टं **पदं**=स्वरूपं, पद्यते गम्यते सूरिभिरिति तद्व्युत्पत्तेः, **सदा**=सर्वदा **पश्यन्ति**=साक्षात्कुर्वन्ति **सूरयः**=विद्वांसः । तत्र साक्षात्कारे निदर्शनम्—**इव**=यथा **दिवि**=द्युलोके व्योम्नि **आततं**=समन्ततो रश्मिभिर्विस्तारं प्राप्तं व्याप्तं तत्रोद्यन्तमित्यभिप्रायः, **चक्षुः**=कर्मणि द्वितीया, सूर्य्यं **"सूर्य्यो भूतस्यैकं चक्षुः"** ( अथर्व० १३।२।४५ ) **"सूर्य्यो वै प्रजानां चक्षुः"** ( शतपथ० १३।३।८।४ ) **"सूर्य्यो यथा सर्वलोकस्य चक्षुः"** ( कठोप० ५।११ ) इत्यादिश्रुतिभ्यः, निरन्तरं स्फुटतरं स्पष्टतरं पश्यन्ति, तथेत्यर्थः । दर्शनानन्तरं च ध्रुवाऽमृतत्वनाम्न्युभयी मुक्तिरित्यन्यत्र विस्तरः ॥ १६ ॥

समाप्तमुपासनकर्म । अथोपास्यदेवाय नमस्कारो विधातव्यः **"भूयिष्ठां ते नमउक्तिं विधेम"** ( यजु० ४०।१८ ) इति मन्त्रवर्णात् । तत्रैष विनियुज्यते नमस्कारमन्त्रः—

{ऋषिः परमेष्ठी प्रजापतिः, देवता रुद्रः, छन्दो बृहती}

**"नमः शम्भवाय च मयोभवाय च । नमः शङ्कराय च मयस्कराय च । नमः शिवाय च शिवतराय च" ॥१७॥**

(यजु० १६।४१)

**नमः**=नमस्कारः, **शम्भवाय**=शं मोक्षसुखं भवत्यस्मादसौ शम्भवः, तस्मै मोक्षसुखहेतवे, च=पुनः **मयोभवाय**=मयः संसारसुखं भवत्यस्मादसौ मयोभवः, तस्मै संसारसुखहेतवे, च=नमो नमस्कारः । **नमः**=नमस्कारः, **शङ्कराय**=शं मोक्षसुखं करोतीति शङ्करः, तस्मै मोक्षसुखकारिणे मोक्षसुखप्रदात्रे, च=पुनः **मयस्कराय**=मयः संसारसुखं करोतीति मयस्करः, तस्मै संसारसुखकारिणे संसारसुखप्रदात्रे, च=नमो नमस्कारः । **नमः**=नमस्कारः **शिवाय**=कल्याणरूपाय, च=पुनः **शिवतराय**=अतिशयेन कल्याणरूपाय च=नमो नमस्कार इत्यर्थः ।

सुखं खलु द्विविधम्—ऐहिकमामुष्मिकं च । संसारसुखमैहिकम्, मोक्षसुखमामुष्मिकम् । संसारसुखमभ्युदयसुखं चेत्यनर्थान्तरम् । तत्र मोक्षसुखं शान्तत्वाच्छंपदेन, संसारसुखं च संसारदुःखप्रतिद्वन्द्वित्वान्मयःपदेनाभिधीयते । पुनरर्थः प्रथमश्चः, नमःपदपरामर्शार्थो द्वितीयः । मोक्षसुखस्य संसारसुखस्य चाधिष्ठानं दाता च जगद्गुरुरीश्वरः प्रसिद्धः । अधिष्ठानमाश्रयो हेतुरिति चैकोऽर्थः । स च स्वयं कल्याणरूपत्वादस्ति शिवः, शरणागतानां परेषां कल्याणरूपकरणाच्च शिवतरः । यस्य शिवस्य समीपं गता अपि पुमांसः खलु शिवाः सम्पद्यन्ते स निःसंशयं भवति शिवतरः, नास्ति विवादावकाशः । शिवत्वं निष्पापत्वम् । तदेव कल्याणपदेन मङ्गलपदेन चाख्यायते । यः सर्वस्य जगतो गुरुर्भवन्नस्ति मोक्षसुखस्य संसारसुखस्य चाश्रयः, विद्यते मोक्षसुखस्य संसारसुखस्य च दाता, वर्तते स्वयं कल्याणरूपः, पराँश्च शरणागतान् कुरुते कल्याणरूपान्, तस्मै जगज्जन्मादिहेतवे सच्चिदानन्दमूर्त्तयेऽन्तरात्मने महसे देवाय गुरवे मुहुर्मुहुर्नमस्कारो भूयादित्यभ्युच्चयार्थः ।

नमस्कारो नम्रीभूय सत्कारः, स्वापकर्षविद्योतककरशिरस्संयोगविशेषा-
दिना तोपस्तोषः ॥ १७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मा-
रामभगवत्पूज्यपादशिष्यहरिप्रसादवैदिकमुनि-
विरचितं वैदिकसन्ध्यावैदिकभाष्यम् ।



## अथ श्रीमन्निखिलशास्त्रनिष्णातपण्डितस्वामि-हरिप्रसादवैदिकमुनिविरचिता ग्रन्थाः



| | मूल्य. |
|---|---|
| वेदान्तसूत्रवैदिकवृत्तिः | ५।) |
| न्यायसूत्रवैदिकवृत्तिः | २॥=) |
| वैशेषिकसूत्रवैदिकवृत्तिः | १॥=) |
| सांख्यसूत्रवैदिकवृत्तिः | १) |
| योगसूत्रवैदिकवृत्तिः | ॥।) |
| वेदसर्वस्व (भाषा) | १।) |
| सामवेदः (भाषानुवादसहितः) | ।) |
| वैदिकसन्ध्याभाष्यम् | ॥) |
| वैदिकसन्ध्याभाष्यम् (भाषानुवादसहितम्) | ॥) |

---

प्राप्तिस्थानम्

मैनेजर महेशौषधालय—
पापड़ मण्डी—
शाह आल्मी दरवाजा—
लाहौर.